मुक्तावन्ततवंशे समजनि विदितो थाहडः श्रेष्ठिवर्यः
सद्वृत्तः कान्तकीर्तिः प्रवरगुणगणः प्रासूतिः शास्त्रदोषः ।
आनन्दाधारमूर्तिस्त्रिभुवनभवनोत्सङ्गरङ्गत्सुकीर्तिः
स्फुर्जत्पुण्यप्रबन्धोद्भववशविलसत्प्राभवत्स्फूर्तिपूर्तिः ॥२॥
नयविनयविततिविठपितसितांशुसितकीर्तिधवलितदशाशः (!) ।
पुण्याधारपवित्रसूत्रपुत्रो धवलनामाऽसीत् ॥३॥
अजनीह मरुसंज्ञा मरुस्थली पापपङ्कजवनस्य ।
तस्य प्रवरा जाया विशुद्धशीला विगतमाया ॥४॥
तत्पुत्री ठकुराणी समभवदसमक्षान्तिविस्तीर्णशाला
नाऊनामा शशाङ्कद्युतिधवलगुणैः साधुशस्यैर्विशाला ।
धर्मानुष्ठाननिष्ठा विधिवशविकसत्कीर्तिसंभारसारा
प्राज्यस्फुर्जद्विवेकप्रतिहतविततोद्दामदुर्वारमारा ॥५॥

इतश्च,

सञ्जातोऽत्रैव वंशे निरुपममहिमा भाग्यसौभाग्यभूमिः
श्रीपालष्ठक्कुराग्र्यः प्रथितशुचियशाः.... ....
या गतेषु द्वादशवर्षशतेषु विक्रमतो गतेषु षष्टितमे ।
वर्षे ज्येष्ठमासे श्रवणे मे कृष्णपञ्चम्याम् ॥१॥
जीवादिविषयसंशयतमोऽपहारैकतरणिरुचिरा ।
योगे चन्द्रे सिद्धावियं जयन्तीकथा रचिता ॥२॥
मोहमहीपतिविजये चतुरङ्गबलेन शुचिगुणस्यूता ।
इह जगति वैजयन्ती जयतु जयन्तीकथा सुचिरम् ॥३॥

[ 1092 ]

अन्तः— तवगणगयणदिणिंदा जुगपवरा सोमसुन्दरमुणिंदा ।
जेसिं जयम्मि अज्ज वि जसपडहो वज्जए सज्जो ॥१॥
तेसिं कमेण जाया सिरिलच्छीसायरा जुगप्पवरा ।
जेसिं मुणीसराणं महिमं को वण्णिउं तरइ ? ॥२॥
तप्पट्टपुव्वपव्वयदिप्पंतदिणेसरा जुगप्पवरा ।
सिरिसुमुदसाहुसूरीसरा य दाणिं जयंति जए ॥३॥
सोहग्गजुग्गविज्जाकिरिआसंविग्गयापहाणेहिं ।
सूरिगुणेहिं न सरिसो जेसिं न हु दीसए अन्नो ॥४॥

सिरिजिणहरिसमुणीसा पंडिअसिरसेहरा विणेयवरा।
जणहरिसं जणयंता तेसिं जाया निअगुणेहिं ॥५॥
तेसिं महामुणीणं उवमाणं कहइ समेइसुरसूरी।
चउवीसं मुणिणो जं जेसिं विबुहाहिवा जाया ॥६॥
तेसिं सीसवयंसा वायंगणवाइलद्धसुद्धजसा।
सिरिसाहुविजयविबुहा जयंति जणजणिअपडिबोहा ॥७॥
तं तेसिं पुज्जाणं माहप्पमणुत्तरं परिप्फुरई।
अम्हारिसा जडा जं कुणंति हरिसं निअवएहिं ॥८॥
सुहवद्धणेण तेसिं सीसवयंसेण अप्पमइएण।
दससड्ढाण चरिअं उद्धरिअं सत्तमंगाओ ॥९॥
पनरसछायालीसे (१५४६) आसोमासम्मि सुद्धदसमीए।
सुहचाररिक्खजोए लिहिअं चरिअं पवित्थरओ ॥१०॥
इति दशश्रावकचरित्रं समाप्तम् ॥ सं० १९६६ माहसुदि ५ ॥

[ 1096 ]

अन्तः—आसी कुंदेन्दुसुद्धे विउलससिकुले चारुचारित्तपत्तं
सूरी सेयंबराणं वरतिलयसमो सव्वदेवाभिहाणो।
नाणासीसप्पसाहापडियमहिमो कप्परुक्खो व्व गच्छो
जाओ जत्तो पवित्तो गुणसुरसफलो सुप्पसिद्धो जयम्मि ॥१॥
तेसिं चासी सुयजलनिही खंतदंतोपसंतो
सीसो वीसो सियगुणगणो नेमिचंदो मुणिंदो
जो विक्खाओ पुहइवलए उग्गचारी विहारी
मन्ने नो से मिहिर-ससिणो तेयकंतीहि तुल्ला ॥२॥
तेसिं च सीसो पयईजडप्पा अदिट्ठपुव्विल्लविसिट्ठसत्थो।
परोवयारेक्करसावियड्ढो जाओ निसग्गेण कइत्तकोड्डी ॥३॥
जो सव्वदेवमुणिपुंगवदिक्खिएहिं साहित्त-तक्क-समएसु सुसिक्खिएहिं।
संपाविओ वरपयं सिरिचंदसूरिपुज्जेहि पक्खमुवगम्म गुणेसु भूरि ॥४॥
संवेगंबुनिवाणं एयं सिरिसंतिसूरिणा तेण।
बज्जरियं वरचरियं मुणिचंदविणेयवयणाओ ॥५॥
जइ किंचि अजुत्तं वुत्तमेत्थ मइजड्डरहसवित्तीहिं।
समणुग्गहबुद्धीए सोहेयव्वं छइल्लेहिं ॥६॥

इगतीसाहियसोलससएहिं (१६३१) वासाण निव्वुए वीरे ।
कत्तियचरिमतिहीए कत्तियरिक्खे परिसमत्तं ॥७॥
जयइ पयइसुद्धं अंगुलीहेमवत्तं सहयसुहयगंधं भव्वभिंगोहजुट्ठं ।
वियसियममिलाणं पावपंकेकमुक्कं कयजयसरसोहं वीरपायारविंदं ॥
इय पुहइचंदचरिए एक्कारसमं भवगहणं समत्तं ॥५७७॥
गंथसिलोगपमाणं सत्त सहस्साइं पंच य सयाइं ।
इय पुहइचंदचरिए विणिच्छियं पायसो गणिउं ॥
अङ्कतोऽपि ७५०० ॥ शिवमस्तु सर्वजगतः ।

[ 1098 ]

अन्तः— सिरिवद्धमाणतित्थे कोडियगणम्मि वइरसाहाए ।
चंदकुले वडगच्छे सयंभुरमणे व्व बहुउदए ॥१॥
लच्छीकलाकलावासमाणमेहाहिं सच्चवियनामो ।
जाओ विक्खाओ मुणिइंदो जिणचंदसूरि त्ति ॥२॥
वज्जिरजसपडहारवनच्चावियकित्तितरुणिरयणस्स ।
अणणुगुणरयणनिहिणो गुरुणो सिरिचंदसूरिस्स ॥३॥
विरइयबहुप्पबंधो गुरुपयसरणोवलद्धसुहलेसो ।
एसो विणेयलेसो जाओ हरिभद्दसूरि त्ति ॥४॥
इत्तो य,
सिरिपोरुयाडवंसे सुवणिओ सुयणहिययकयवासो ।
मुत्तामणि व्व निन्नयअभिहाणो ठक्कुरो आसि ॥५।
अह पयडीहूअसिरिदेवीउवइट्ठअसमअब्भुदओ ।
सो सिरिमालपुराओ पत्तो गंभूयनयरीए ॥६॥
तत्थ य तग्गेहमहासरम्मि विलसंतविउलकमलम्मि ।
पायडियकुसुमवणरायमंडलोवचियपयविहवो ॥७॥
पसरंतगंधसिन्धूरघडाहिं वग्गंततुरयघट्टेहिं ।
कस्स न जणेइ विम्हयमणेगसो उदयवित्थारो ॥८॥
जइणणयमइणा अणहिल्लपुरे वणरायनिवइनीएण ।
विज्जाहरगच्छे रिसहजिणहरं तेण कारवियं ॥९॥
तत्तो विचित्तनयपत्तकित्तिपसराओ रयणनिहिणो व्व ।
बहुसंख-सुत्तिसुहओ जाओ लहरो त्ति दंडवई ॥१०॥

वग्गंततुरयघट्टस्स विंझगिरिसंनिवेसपत्तस्स ।
समग्गगहियकुंजरघडस्स तह निययपुरसम्मुहं ॥११॥
आगमिरस्स रिऊहिं तग्गयगहणूसुएहिं सह समरे ।
जस्सेह विंझवासिणिदेवी धणुहम्मि अवइण्णा ॥१२॥
ता पत्तसत्तुविजएण तेण सा विंझवासिणी देवी ।
धणुहाविअवरनामा ठविया संडत्थलग्गामे ॥१३॥
अह लच्छि-सरस्सईओ सद्धम्मगुणाणुरंजियाओ व्व ।
जस्सुज्झियईसाओ मुंचंति न संनिहाणं पि ॥१४॥
तह सिरिवरोवलद्धो जेण पडो रायटंकसालाए ।
संठविओ लच्छी उण निवेसिया सयलमुद्दासु ॥१५॥
सो चोलुक्कसिरिमूलराय-चामुंडरायरज्जेसु ।
वल्लहराय-नराहिवदुल्लहरायाणमवि काले ॥१६॥
निच्चं पि पक्कमंती जाओ पज्जंतचरियचारित्तो ।
सिरिमूलरायनरवइम(र)ज्जालंकुरो वीरो ॥१७॥
तस्स उ सिरिसरस्सइदेवीण पुढो पुढो निवासस्स ।
दो पुरिसपुंडरीया जाया वसुहाए विक्खाया ॥१८॥
तत्थ य निहणियदोसो पयडियकमलोदओ दिणयरुव्व ।
सिरिभीमएवरज्जे नेढो त्ति महामई पढमो ॥१९॥
बीओ य सरयसस[ह]रनिम्मलगुणरयणमंदिरमुदारं ।
निययप्पहावअहिरयतरणी विमल त्ति दंडवई ॥२०॥
अह भीमएवनरवइवयणेण गहियसयलरिउविहवो ।
चड्डावल्लीविसयं स पहुवलद्धं ति भुंजंतो ॥२१॥
दट्ठूण तियसभवणारोहंतपसत्थजंतुनिस्सेणिं ।
सिरिनंदिवद्धणापरनामं अब्बुयगिरिंदमिमं ॥२२॥
नणु विविहसंविहाणयघरमुत्तिमतित्थमवि इमो सिहरी ।
इय जइ इमस्स उवरिं कारिज्जइ रिसहजिणभवणं ॥२३॥
ता कयकिच्चं मन्ने सजीवियव्वं बलं च लच्छि च ।
इय चिंततो सिविणे अंबाएवीए भणिओ सो ॥२४॥
जइ भद्द ! सुंदरमिमं चिंतियमिय हिययइच्छियं कु[ण]सु ।

तुज्झ बिइज्जा होउ करेस्स महियंपि साहेज्ज ॥२५॥
सिरिभीमएवनरवइ-नेढाण वि पत्तुयत्थउवएसं ।
वियरइ देवी तक्खणमह सो तेहिं वि अणुण्णाओ ॥२६॥
सिरिरिसहबिंबदिणयरउज्झोइयमज्झमूसियपडायं ।
सुविभत्तचित्तसालं जिणसासणभणियनीईए ॥२७॥
पयडीहोउं अंबाएवीउवइट्ठसंनिवेसम्मि ।
अब्बुयगिरिणो उवरिं जिणभवणमिणं करावेइ ॥२८॥
अह नेढमहामइणो तणओ सिरिकण्णएवरज्जम्मि ।
जाओ नियजसधवलियभुवणो धवलो मंतिवरो ॥२९॥
तत्तो य रेवंतकयप्पसायसंपत्तउत्तिमसमिद्धी ।
धणुहाविदेवयासंनिहाणनिन्नट्ठउवसग्गो ॥३०॥
जयसीहएवरज्जे गुरुगुणवसउल्लसंतमाहप्पो ।
जाओ भुवणाणंदो आणंदो नाम सचिविंदो ॥३१॥
तस्स ससिविमलसीलालंकारविरायमाणसव्वंगी ।
गुरु विणय-प[णय]वच्छल्ल(ल्ल)धम्मकम्माणुरत्तमणा ॥३२॥
अहवा समग्गजयकयविम्हयगुणरयणपरममंजूसा ।
पउमावइ त्ति नामेण विस्सुया पिययमा जाया ॥३३॥
अह सिद्धराय-सिरिकुमरवालएवावणिंदतिलयाणं ।
पुण्णभरभारविहुरियमिव दट्ठूणं पुहइपीढं ॥३४॥
आणंदमहामइणो जयसुकयसंचएणं च ।
वयगर[ण–स्सिरिगर]णारंभमहाभारधुरधवलो ॥३५॥
जयसीहएव-सिरिकुमरवालनरनायगाण रज्जेसु ।
सिरिपुहइवालमंती अवितहनामो इमो विहिओ ॥३६॥
अह निन्नयकाराविय जालिहरयगच्छरिसहजिणभवणे ।
जणयकए जणणीए उ पंचासरयपासगिहे ॥३७॥
वजु(चड्डा)वलीयम्मि य गच्छे मायामहीए सुहहेउं ।
अणहिल्लवाडयपुरे कराविया मंडवा जेण ॥३८॥
रोहावियवारसागसायणवाडयपुरे उ संतिस्स ।
जिणभवणं कारवियं मायामयवोल्हयस्स कए ॥३९॥

अब्बुयगिरिम्मि सिरिनेढ–विमलजिणमंदिरे करावेउं ।
मंडवमईवविम्हयजणयं पुरओ पुणो तस्स ॥४०॥
विलसिरकरेणुयाणं सवंसपुरिसोत्तमाण मुत्तीओ ।
विहियं च संघभत्तिं बहु[पु]त्थय–वत्थदाणेण ॥४१॥
निच्चंपि महामइणो तेण कयत्थीकओ धुवं अप्पा ।
अह सविसेस सजणणी-जणयप्पाणं सुकयरइणो ॥४२॥
निरुवमसरस्सईवरपहावउवलद्धवंछियत्थस्स ।
दुन्नयतमभररविणो नयपहासारहिसिरोमणिणो ॥४३॥
नर-नारि-करि-तुरंगम-रयणापरिक्खाविहाणदक्खस्स ।
अब्भत्थणाए सिरिपुहइवालसचिवाहिरायस्स ॥४४॥
सिरिचन्दसूरिगुरुपयपउमायर पुव्वसरणअणुहावा ।
संमाणहिगयसत्थविसेसेण वि अप्पमइणा वि ॥४५॥
हरिभद्दसूरिणा सव्वदेवगणिविहियसंनिहाणेण ।
पुव्वकइंदपरम्परविरइयगंथेऽवलोएउं ॥४६॥
अणहिल्लवाडयपुरे सिरिकुमरप्पालएवरज्जम्मि ।
सिरिमल्लिनाहपहुणो सिरिभिस्सयगणहरजुयस्स ॥४७॥
कह कहवि समक्खाओ लेसेण इमो तइयपत्थावो ।
तत्तो महापसायं काऊण महोवरिं सुयणा ॥४८॥
जं किंचि मए अणुचियमुवइट्ठं सुज्झवेह तमसेसं ।
नहि दिणयरस्स उदये अवयासो तिमिरनियरस्स ॥४९॥
सिरिमल्लिनाहचरिए हरिभद्दमुणीसरेहिं पविरईए ।
परमपयं तो तइओ पत्थावो संपवक्खाओ ॥५०॥
श्रीमल्लितीर्थाधिपसच्चरित्रप्रस्तावदीपं विशदं हृदीमम् ।
भव्याः कुरुध्वं स्वतमस्ततीनां यद्यस्ति विच्छेदमतिस्तदानीम् ॥५१॥छ॥
जाव ससी जाव रवी निययपयावेण पयडए भुवणं ।
ता मल्लिनाहजिणवरचरियमिणं जयउ जीयलोए ॥५२॥
यस्यांह्रिद्वयनखमणिमयूखसंक्रान्तसुरपतिश्रेणी ।
निजलघुतामिव कथयति जयत्वसौ मल्लिजिननाथः ॥५३॥
उच्चल्लक्षणशास्त्रसंचयनिधीन् सद्धर्ममुद्रावधीन्
सिद्धान्तैकसहस्रपत्रतरणीन् सद्वादिचूडामणीन् ।

तर्काब्धन्यतरून् मनोभववधूवैधव्यदीक्षागुरून्
साहित्यामृतसागरान् मुनिवरान् श्रीचन्द्रसूरीन् स्तुवे ॥५४॥छा॥
इति श्रीचन्द्रसूरिक्रमकमलभसलश्रीहरिभद्रसूरि–
रचिते श्रीमल्लिचरिते निर्वाणवापको
नाम तृतीयः प्रस्तावः ॥

गाथाकाव्य ६७०८ ॥ ग्रन्थाग्रम् ९००० ॥ संवत् १६६२ वर्षे पोष-
मासे कृष्णपक्षे चतुर्दशीतिथौ श्रीग(भृगु)वासरे लिखितं महं० कहानजीसुतगोवर्धनः ॥

[ 1108 ]

अन्तः— अब्भक्खाण विवागसूयमिणं संवेगसंसाहगं
सव्वेसिं पि जणेण विम्हयकरं सीलप्पसंसापरं ।
किं वीराहवलक्खणेहि सहिउ लंकाहिवेणं तहा
सीयादेविमहासईइ चरियं संखेवओ साहियं ॥
नाऊणं परिभाविऊण हियए सम्मं इमं सव्वहा
अब्भक्खाणमसंखदुक्खजणगं वज्जेह भव्वा जणा ।
सीलं सव्वगुणाण भूसणकरं निव्वाणसंपायगं
खंडिज्जंतमलं .... सियलं रक्खेह निच्चं तहा ।
एवं सीयाचरियं वज्जरियं सेणियस्स नरवइणा ।
जह णायमेण तह महसूरीहिं निवेइयं किंचि ॥
ग्रन्थाग्रम् ३४०० । इति धर्माधर्मविचारे सीताइचरित्तं ॥

[ 1165 ]

अन्तः— इति श्रीशत्रुञ्जयमाहात्म्यं धनेश्वरसूरिकृतं समाप्तं संपूर्णम् ।

संवत् १८५२ ना वर्षे मागसरमासे शुक्लपक्षे पञ्चमीतिथौ ५ बुधवारे धनिष्ठा-
नक्षत्रे हर्षणनामायोगे तपागच्छे राजवल्लभाभिधे भट्टारकश्री १०८ श्रीराजविजय-
सूरि-तत्पट्टे भट्टारकश्री १०८ श्रीरत्नविजयसूरि-तत्पट्टे भट्टारकश्री १०८ श्रीहीर-
रत्नसूरिः, तत्पट्टे भट्टारकश्रीजयरत्नसूरिः, तत्पट्टे भट्टारकश्री १०८ दानरत्नसूरिः तत्पट्टे
भट्टारकश्री १०८ श्रीकीर्तिरत्नसूरिः, तच्छिष्यपादरजःमुनिना ऋद्धिरत्नेन लिपी-
कृतम् । भट्टारकश्री १०८ श्रीमुक्तिरत्नसूरिराजैः लिपीकृतम्, श्रीभीडभञ्जनप्रभुप्रसादात्
श्रीखेटकपुरमध्ये सेढी-वात्रकनघास्तटे ॥

[1265]

अन्तः— वृत्तरत्नाकरे वृत्तिं गणिः समयसुन्दरः ।
षष्ठाध्यायसंबद्धा पूर्णीचक्रे प्रयत्नतः ॥२॥

संवति विधिमुख-निधि-रस-शशि(१६९४)संख्ये दीपपर्वदिवसे च ।
जालोरनामनगरे लुणिया कसलार्पितस्थाने ॥२॥
श्रीमत्खरतरगच्छे श्रीजिनचन्द्रसूरयः ।
तेषां सकलचन्द्राख्यो विनेयः प्रथमोऽभवत् ॥३॥
तच्छिष्यसमयसुन्दर एतां वृत्तिं चकार सुगमतराम् ।
श्रीजिनसागरसूरिप्रवरे गच्छाधिराजेऽस्मिन् ॥४॥
यः कोऽपि मत्सरी मूढः प्रशस्तिं न लिखिष्यति ।
स लोके लप्स्यते निन्दां कुणिर्भावी परत्र च ॥५॥

इति वृत्तरत्नाकराख्ये छन्दसि । श्रीसमयसुन्दरोपाध्यायविरचितायां वृत्तरत्नाकर-सुगमवृत्तौ षष्ठोऽध्यायः संपूर्णः ॥ ग्र० १३००॥

संवत् १७१५ प्रमिते श्रावणवदिपञ्चमीतिथौ पं० श्रीराजसुन्दरगणिशिष्य-भुजिष्यपं० रूपसुन्दरगणिनाऽलेखि श्रीजयतारणनगरे ॥

[ 1269 ]

**अन्तः**—श्रीलब्धिवर्धनमुनेर्विनयी विनेयो विद्यावतां क्रमसरोजपरीष्टिपूतः ।
चक्रे यथामति शुभां शिवचन्द्रनामा वृत्तिं विदग्धमुखमण्डनकाव्यसत्काम् ॥१॥
नन्दर्तु-भूपाल(१६६९)विशालवर्षे हर्षेण वर्षात्ययहर्षदर्तौ ।
मेवाति देशे लवराभिधाने पुरे समारब्धमिदं समासीत् ॥२॥
विख्यातः शासनेऽस्मिन् प्रवरखरतराभिख्यगच्छो गरीयान्
यस्मिन् योगेन्द्रमुख्या जिनकुशलवराः सूरयः संबभूवुः ।
चारित्राचारचञ्चुर्विहितयतिनतिः सूरिराड् जैनसिंहः
सिंहो वादिद्विपानां श्रुतजलजलधिः शास्ति भट्टारकत्वम् ॥३॥
श्रीलब्धिवर्धनमुनिर्महिमैकमेरुः श्रीजैनसिंहसुगुरोरजनिष्ट शिष्यः ।
येषां कुशाग्रधिषणा मुपदप्रविष्टा शिष्याः समीयुरवनीशसमाजभाजः ॥४॥
ऊकेशवंशे परिलब्धजन्मा जग्राह दीक्षां विधिवद् गणेऽस्मिन् ।
भ्रातुः क्षमाचन्द्रगणेर्निदेशावृत्तिं प्रकुर्वे शिवचन्द्रनामा ॥५॥
अथाग्रे कविना गर्वापहारः—
क्रियते यत् किञ्चिदिह विरुद्धं यदशुद्धं वा व्यलेखि मतिमान्द्यात् ।
कृत्वा मय्यनुकम्पां तच्छोध्यं धीधनैः सदयैः ॥६॥

इति श्रीधर्मदासकविविरचिते विदग्धमुखमण्डने काव्यालङ्कारे श्रीबृहत्खरतर-गच्छे पण्डितश्रीलब्धिवर्धनमुनेः शिष्यशिवचन्द्रेण कृता सुबोधिका नाम चतुर्थपरिच्छेदस्य वृत्तिः ॥ वृत्तेः प्रमाणमिदम्—२५०४ ग्रन्थाग्रमेतद् विज्ञेयं लोकैरित्यलम् ॥

[1282]

अन्तः— देशानां वरदातटं वरमतः स्वार्थाभिधानं महा-
स्थानं वेदपदं सदग्रजगणाग्रण्यं सहस्रं द्विजाः ।
तत्रासीधु धनेश-केशव.. विद्वद्वैद्यौ वरिष्ठौ क्रमा-
च्चक्रे शिष्यसुतस्तयोः कृतिमिति श्रीबोपदेवः कविः ॥१॥
कैलासाचलमौलिमण्डनमणेर्नृत्योत्सवे यद्यशो
गायन्ति त्रिदशाङ्गनाः कलरवा गम्भीरतारस्वनैः ।
चक्रे यश्च कलांशगोपितशतश्लोकीं पदोल्लासितां
स त्रैलोक्यमहाकवीन्द्रतिलकः श्रीबोपदेवः कविः ॥२॥

इति योगराजसमुच्चये शतश्लोकी क्वाथाधिकारः संपूर्णः ॥

संवत् १८६६ ना वर्षे वैशाखसुद ७ गुरौ लिखितं वैद्यसकरदास झुखणदास तस्य पठनार्थे भाइ भगवानदासपठनार्थम् ।

द्वे द्वे लोचने सर्वेषां विद्या तृतीयलोचनम् ।
चतुर्थं लोचनं धर्मः ज्ञानी अनन्तलोचनः ॥

वैद्य भगवान् संकरः झुखणकुयरजी रेवादास कल्याण मकनदास मुल वतन गाम साणंदना वैद्यराज उल्लास करीने भणजो ।

[1298]

इति सन्ध्यापाचकदशाफलं संपूर्णम् ।

तपोगणो नागपुरीयपूर्वे श्रीचन्द्रकीर्त्याह्वयसूरिराजाः ।
तेषां विनेयर्षभहर्षकीर्तिसूरिस्त्विमां पद्धतिमुद्दधार ॥१॥
पुण्यैरेवार्थसंसिद्धौ सत्यां स्रग्गुम्फनं यथा ।
तथा प्रकीर्णशास्त्रेषु सत्सु पद्धतिर्निर्मिता ॥२॥
यावन्मेरुर्धरापीठे यावच्चन्द्र-दीवाकरौ ।
तावदेषा जन्मपत्रीपद्धतिर्वर्ततां चिरम् ॥३॥

इति श्रीमन्नागपुरीयतपागच्छमण्डनभट्टारकश्रीचन्द्रकीर्तिसूरिशिष्यश्रीहर्षकीर्तिसूरिसंकलितायां जन्मपत्रीपद्धतौ द्वितीयोऽधिकारः ॥ समाप्ता चेयं जन्मपत्रीपद्धतिः ॥

संवत् रस-वेद-मुनि-शशि(१७४३)प्रमिते वर्षे ज्येष्ठवदित्रयोदशीतिथौ शुभदिने भौमवारे नवग्रीर्हानगरमध्ये भट्टारकप्रभुश्रीमच्छ्रीश्री १०६ श्रीजिनरत्नसूरीश्वरान्तेवासी शिष्यमुख्यपण्डितप्रवरश्री १०६ श्रीविजयलाभजीगणिवराणां शिष्यः अन्तेवासी पं० विजयशेखरमुनिलिपीकृतम् ॥

## आ० श्रीविजयक्षान्तिसूरीणां हस्तप्रतिसंग्रहस्य प्रशस्त्यादिसंग्रहः

[ 9 ]

अन्तः--- कम्रि-वारण-ग्लौ(१८३१)वर्षे मधुसितेतरपक्षके ।
समौमद्वादशीघस्रे लिखितोऽयं सुपुस्तकः ॥१॥
क्षमामाणिक्यगणिना श्रीक्षान्तिविजयाग्रहात् ।
आचाराङ्गस्य [च] व्याख्या वाचनीया बुधैर्मुदा ॥२॥

[ 14 ]

अन्तः-- संवत् १६०५ वर्षे ज्येष्ठवदि १३ रविवारे श्रीअहम्मदावाद-नगरवास्तव्यश्रीश्रीमालज्ञातिशृङ्गारसंघवी श्रीतेजाभार्या....पुत्ररत्नसंघवी श्रीरूपचन्द-संघवी श्रीदेवचंदभार्या इन्द-पुत्रसंघवी सहसकरण-संघवी श्रीगला-संघवीमूला-प्रमुखसमस्तकुटुम्बयुतेन श्रीसू[य]गडांगदीपिका लिखापिता। प्रतिरियं पुण्यार्थं पण्डितश्रीविनयकीर्तिगणिवाच्यमाना चिरं जीयात्।

संवत् १६८० वर्षे श्रावणसुदि ४ दिने श्रीजावालपुरे श्रीखरतरगच्छे श्रीजिन-राजसूरिधर्मसाम्राज्ये वाचकश्रीहर्षसारगणि-शिष्यश्रीशिवनिधानगणिया[का]नां पुस्तकं शिष्य-प्रशिष्यैर्वाच्यमानं ज्ञानवृद्धयै भवतु ॥

[ 23 ]

अन्तः--अङ्गाक्षि-क्षितिभृत्-सुधाकर[१७२६]मिते संवत्सरे वैक्रमे
क्ष्मामर्तुर्वरराधमासि धवले पक्षे चतुर्थ्यां तिथौ ।
द्रङ्गे श्रीजयतारणे खरतरे गच्छेऽतिवृद्धे चिरं
राज्यं कुर्वति मानिते नृपतिभिः श्रीजैनचन्द्रे प्रभौ ॥१॥
श्रीयुक्पाठकराजराजविजयाः सौभाग्यभाग्यालया-
स्तच्छिष्याः पटुवाचकाः सुकृतिनः श्रीरूपहर्षाभिधाः ।
तच्छिष्येण तदीयशास्तिचरणप्राप्तप्रशंसेन वै
श्रीमत्सूत्रकृताङ्गवृत्तिरमला पूर्णीकृता लेखनात् ॥२॥
अन्यदीयहस्तेन लिखितमिदम्-
वा० श्री१०८श्रीकेसरीचन्दजीगणीनां शिष्यपं०मोतीचन्द्रकस्यैवम् ॥

[ 29 ]

अन्तः--नागोरमध्ये लिपीकृतं लहिया जोशी श्रीवल्लभः ॥

सं० १९७४ फाल्गुन कृष्ण ४ पुस्तक श्रीमान् श्रीमोहनलालजी महाराजना प्रधानशिष्यश्रीजगत्प्रसिद्धपंन्यासजी हरखमुनिजीनी छे ।

[ 34 ]

**अन्तः**—सं० १८७६ रा वर्षे दुतिकयेष्ट (द्वितीयज्येष्ठ) कृष्ण ५ तिथौ गुरुवारे ॥

संवन्नारद-नन्द-काय-शशभृद्(१६९९)वर्षे वरेण्येऽमले
सच्छोभायुतफाल्गुनाह्वयदघन्मासे सतां सम्मते ।
नक्षत्राधिपधौततामसतमे पक्षे विपक्षेऽहसां
पुण्णोष्णांशुपवित्रितोज्ज्वलतिथावेकादशीनामनि ॥१॥
श्रीमद्बृहिदङ्गभवे वरिष्टे गच्छे तपोनामनि सूरिराजाः ।
श्रीपार्श्वचन्द्रा निजनाम दधते (!)ऽभवन् सदभ्यस्तसमस्तशास्त्राः ॥२॥
श्रीसूरिमुख्याः समरेन्दुसंज्ञा वादीन्द्रवदभ्रसमीरतुल्याः ।
सिद्धान्तवारांनिधिगाहनाय प्रेक्षातरण्डं प्रकटीचकार ॥३॥
राजेन्दवः सूरिकुमुद्वतीन्दवः सौभाग्यसारावधिसन्नतांह्रयः ।
सिद्धान्ततत्वैकसुधाब्धिसन्निभाः यच्छन्तु शास्त्रं निजसेवकाय ॥४॥
श्रीहीरानन्दचन्द्रा निजमतकुमुदाह्लादने पूर्णचन्द्राः
कुज्ञानध्वान्तवारप्रशमदिनकराः सीर(?)कारुण्यपूर्णाः ।
स्वाभिख्याचन्द्रिकाभिर्धवलितजगतः पाठकव्रातवर्य्याः
पुण्योल्लासिप्रभूतोदयसमुदयभूभूघनास्ते जयन्ति ॥५॥
तेषां विनेयेन सदोदयेन विज्ञानसिद्धान्तनयेन चैव ।
ज्ञाताख्यसूत्रस्य सदर्थशंसी(?सिना) कृतो गणिप्रेमजिता टबार्थः ॥६॥

ग्रन्थाग्रन्थसूत्र ६००० सूत्रार्थ सर्वमिली २२००० । लिखितं पं० रामविजय मु० भतीज(?)प्रमाणविजय उभयौ मिलितेन लिपीकृतं (ता) परत (प्रतिः) प्रमाणविजयगणीनी छे । श्रीवग्गवट्टीनगरे चतुर्मासेन लिखितं श्रीशान्तिनाथजीप्रसादात्, श्रीराजाधिराजश्रीमानसींघजीराज्ये ॥

[ 37 ]

संवत् १६३० वर्षे वैशाखशुदिचतुर्दशीगुरुवासरे श्रीमालवामध्ये अवन्तीपुर्यां वास्तव्यप्राग्वाटज्ञातीयवृद्धशाखायां महं श्रीसोनपालभार्या उभयकुलनन्ददायिनी बाई रजां तत्पुत्री श्राविकाशिरोमणिश्रा० वह्लां लिखापिता स्वश्रेयसे समर्पिता श्रीमत्तपागच्छे श्री ५ श्रीहीरविजयसूरिविजयराज्ये पं० देवविजयशिष्यणी साध्वी सहिजश्रीपठनार्थं वाच्यमानं चिरं जयतु, श्रीपार्श्वनाथप्रसादात् शुभमस्तु ॥

[ 56 ]

इति श्रीरायपसेणीयउवंगं समाप्तम्। सकलभट्टारकपुरंदरभट्टार[क] १०८ श्रीविजयप्रभसूरीश्वरचरणसे० सकलवाचकचक्रचूडामणिमहोपाध्यायश्री १०८ श्रीविमलविजयगणि तच्छिष्यमहोपाध्यायश्री १०८ श्रीशुभविजयगणि-तच्छिष्यपण्डित श्री-५ पं० रामविजयगणि-तच्छिष्यमुनिहरितविजयलिपिकृतं पाल्णपुरनगरे संवत् १८०१ वर्षे कार्तिकमासे शुक्लपक्षे पञ्चमीतिथौ रविवारे शुभं :भवतु लेखक-पाठकयोश्च आचन्द्रार्कं यावत्। शिवमस्तु० ॥ यादृशं पुस्तकं० ॥

[ 60 ]

इति पन्नवणाभगवत्यां समुद्घातपदं छत्तीसमं समाप्तम् ॥३६॥ प्रत्यक्षर-गणनया अनुष्टुप्छन्दसः मानमिदम्, ग्रन्थाग्रन्थसंख्यासूत्र ७७८७ प्रमाणम्। इति श्रीपन्नवणासूत्रमिदं समाप्तम् ॥

श्रीमत्तपागणविभासनतापनाभः भव्यान् महद्ु(?)दयकैरवरात्रिरत्नः।
आसीद् गुरुर्विमलसोमगणाधिराजः सौदर्यधैर्यगुणमण्डलवारिराशिः ॥१॥

गच्छे तत्र विशालसोमगुरवः श्रीसूरयः सांप्रतं
वर्तन्ते महीमण्डले गणपदप्राप्तप्रतिष्ठास्पदम्।
नानावाङ्मयसागराम्बुतरणे सद्बुद्धितावाचिता (?)-
चारित्राचरणेन दुष्करतपःश्रीस्थूलभद्रोपमाः ॥२॥

तद्गच्छेऽभूत् क्रियापात्रं विद्वज्जनशिरोमणिः।
श्रीमद्विनयविमलपण्डितः पण्डिताग्रणीः ॥३॥

तच्छिष्यसेवकः साधुः धनविमलनामतः।
प्रज्ञापनाख्यसूत्रस्य वार्तां चक्रे मनोहराम् ॥४॥

यत् किञ्चिल्लिखितं कूटं सूत्रार्थोभयतस्तथा।
विद्वद्भिः हितकाम्यैश्च सर्वं शोध्यं कृपापरैः ॥५॥

संवद् बाण-रवि-बाहु-चन्द्राख्ये (१७१५) मासि माधवे।
गुरुशुक्लतृतीयायां पूर्णीचक्रे स्वबुद्धितः ॥६॥

इति श्रीपन्नवणा-टबार्थः संपू[र्णः]।

संवत् १९३१ना वर्षे फाल्गुणमासे शुक्लपक्षे दशम्यां तिथौ लिपीकृतं मुनिकस्तूरचन्द्रेण स्व-आत्मार्थे लिखी छ(?ब)इन्नदेसमध्ये ॥

[ 61 ]

अन्तः—स्तबककारप्रशस्तिस्तु पूर्वप्रत्यनुसारिणी, लेखनप्रशस्तिस्तावदियम्—

संवत् १७६७ वर्षे आसोसुदि २ तिथौ श्रीमङ्गलवासरे लिखितं सकलपण्डितशिरोरत्नपण्डितोत्तमपण्डितश्रीदेवकुशलगणि-तच्छिष्यपं० विद्याकुशलपं० चतुरकुशलगणिलिखितं श्रीदेवकपत्तने श्रीदादापार्श्वजिनप्रसादात् ॥

[ 72 ]

अन्तः—इति चतुशरणपयनूं संपूर्ण ।

सकलपण्डितसभाभूभामिनीतिलकपण्डितप्रवरपण्डितश्री १९ श्रीदेवविजयगणि—तच्छिष्यपण्डितश्री ५ श्रीकर्पूरविजयगणि-तच्छिष्यपं० षिमाविजयगणिलिपीकृतम् । संवत् १७७८ वर्षे श्रीसिद्धपुरनगरे सुश्राविका पुण्यप्रभाविका श्रा० अगरबाईपठनार्थं शुदि ३ रवौ ॥

[ 74 ]

अन्तः—शर-शर-रस-संवद् (१६५५) मिते वर्षे हर्षेण नागपुरनगरे ।
लिखिता विशालसुन्दरविबुधपदाब्जालिसमशिशुना ॥१॥
यदवद्यमिहाज्ञानाल्लिपीकृतं भवति तत् कृपावद्भिः ।
संशोध्यं गीतार्थैर्निर्मात्सर्यैः श्रुतभक्त्या ॥२॥
सूर्या-चन्द्रमसावेतावु[द्य]ततः नुतोऽम्बरे ।
वाच्यमाना बुधैस्तावदियं नन्दतु सर्वदा ॥३॥
शुभं भवतु । कल्याणमस्तु ।

[ 83, 84, 135 ]

अन्तः संवत् १५६८ वर्षे शाके १४३४ प्रवर्तमाने कार्त्तिकशुदिप्रतिपदारवौ श्रीश्रीमाल्ज्ञातीयश्रे० देधरसु० ठ० आल्हणसी-सु० पाल्हणसी-सु० सा० जइता-सु० सा० राउल-भा० मचकू-सु० सीधर भा० सोही-सु० सा० जूठा-मेघा-भावड-पांचा । जूठासु० सा० महिपति-रूपा-चउथा-हर्षा-सहिसा । सा० महिपति- भा० पचाई—सु० सा० डाहीआ-वस्ता-रूपा-भार्याकीबी-सु० राजा-भोजा-जेठा-धर्म्मसी-चउथाभा० मल्हाई-सु० तेजपाल-कर्म्मसी-पांचा-सु० घुसा-भा० पीदी सु० वर्धमान—पामाप्रमुखकुटुम्बयुतेन सा० मेघाकेन ॥

यः सप्तक्षेत्र्यां निजवित्तबीजं वपन् सदा साधुः स मेघराजः ।
सद्धर्मपत्न्यजनि लाडिकाऽस्य तयोरभूत् पुत्रकुलावतंसः ॥१॥

श्रीमन्मण्डपमेरुमौलिमुकुटप्रायं जिनस्यास्पदं
निर्मायोऽद्भुतजैनबिम्बमतुलं संस्थापितं येन वै ।
श्रीशत्रुञ्जय-रैवताद्रिशिखरे यात्रा कृता सोत्सवं
श्रीमदर्बुदशैलराजशिखरे लब्धा प्रतिष्ठा भृशम् ॥२॥
बृहत्तपावरगच्छे स्वच्छे श्रीगगनोपमे ।
सद्वृत्ता श्रीगुरुचन्द्राः लब्धिसागरसूरयः ॥३॥
निशम्य तेषां सहजोपदेशं तस्याङ्गजेनाशु विवेकसेकतः ।
स्वपितृपुण्याय विचक्षणेन श्रीसोनपालेन नरोत्तमेन ॥४॥
स्मृत्वा स्वपितुर्वचनं मेघातनयेन सोनपालेन ।
जिनमतसक्तग्रन्थश्रीकोशो लेखयांचक्रे ॥५॥
गुणसागर-चारित्रगणी कृतसदोद्यमे ।
मातृ-लेश्या-व्रत-ब्रह्ममिते(१५६८) वर्षे च कार्तिके ॥६॥
वरतरसुवर्णरुचिरो निरस्तदौर्गत्यसंभवक्लेशः ।
श्रीसिद्धान्तः सत्कोशः नन्द्याद् भूमण्डलं यावत् ॥७॥
इति सुखमस्तु ॥

[ 89 ]

अन्तः—महोपाध्यायश्री १०८ श्रीशुभविजयगणि-तच्छिष्यमहोपाध्यायश्री १०८ श्रीहितविजयगणि—सं० १८३० वर्षे पोससुदि २ दिने वारबुधे प्रभातसमये स्वकीय-वाचनाय श्रीपाल्ह[ण]पुरे ग्रं० ६००० ॥ श्रीरस्तु । कल्याणमस्तु ॥

[ 90 ]

अन्तः सं० १५५५ वर्षे तपागच्छनायकश्रीहेमविमलसूरिविजयमानराज्ये ऊपहरावास्तव्यप्राग्वाटजातिशृङ्गार श्रे० राउलभार्यागउरी-पुत्ररत्न सं० देघरभार्या—सं० सलखूसुतसं० अदाभगिनी-मातृमं० नपादिकुटुम्बयुतेन स्वश्रेयसे पूज्याराध्यपं० सत्य-रत्नगणिशिष्यपं० सुन्दरसत्यगणीनामुपदेशेन श्रीकल्पसूत्रं लिखापितम् ॥

[ 94 ]

अन्तः—इति श्रीकल्पसूत्रं संपूर्णम् । सूत्रसंख्या १२१६ । टबो ३४३६ ॥
अक्खरमत्ताहीणं जं किंचि पढियं अयाणमाणेणं ।
तं खमह मज्झ सयं जिणवयणविणिग्गया वाणी ॥१॥

संवत् चन्द्र-शर-मुनि-चन्द्र(१७५१) वर्षे मासअश्विनवदि ७ सप्तम्यां भृगुवासरे श्रीरामपुरादुर्गे पण्डितश्रीरामविमलगणि-तच्छिष्यपण्डितज्ञानविमलगणि-शिष्यपं० मोहनविमलेन लिपीकृतम् ॥ यादृशं० ॥ अज्जा श्रीरतनाजीवाचनार्थम् ॥

[ 96 ]

अन्तः—व्याख्यानं कल्पसूत्रस्य नवमं सुगमं स्फुटम् ।
शिष्यार्थं पाठकाश्चक्रुः समयादिमसुन्दराः ॥१॥
श्रीशासनाधीश्वरवर्धमानो गुणैरनन्तैरतिवर्द्धमानः ।
यदीयतीर्थं ख-खाब्ज-नेत्र (२१००) वर्षाणि यावद् विजयि प्रसिद्धम् ॥१॥
तदीयशिष्यो गणभृच्च पञ्चमः सुधर्म्मनामाऽस्य परम्परायाम् ।
बभूव शाखा किल वज्रनाम्नी चान्द्रं कुलं चन्द्रकुले च निर्मलम् ॥२॥
तद्गच्छे त्वभिधानतः खरतरे यैः स्तम्भनाधीश्वरो
भूमध्यात् प्रकटीकृतः पुनरपि स्नानोदकाद् रुग् गता ।
स्थानाङ्गादिनवाङ्गसूत्रविवृतिर्नव्याऽतिभव्या कृता
श्रीमन्तोऽभयदेवसूरिगुरवो जाता जगद्विश्रुताः ॥३॥
यो योगिनीभ्यो जगृहे ददौ च वरान् वरान् जाग्रदनेकविद्यः ।
पञ्चापि पीरान् स्ववशीचकार युगप्रधानो जिनदत्तसूरिः ॥४॥
पुनरपि यस्मिन् गच्छे बभूव जिनकुशलनाम सूरिवरः ।
यस्य स्तूपनिवेशाः सुयशःपुञ्जा इवाभान्ति ॥५॥
तत्पट्टानुक्रमतः श्रीमज्जिनचन्द्रसूरिनामानः ।
जाता युगप्रधाना सु(? दि)ल्लीपतिपातसाहिकृताः ॥६॥
अकबररञ्जनपूर्वं द्वादशसुवेषु सर्वदेशेषु ।
स्फुटतरममारिपटहः प्रवादितो यैश्च सूरिवरैः ॥७॥
यद्वारे किल कर्मचन्द्रसचिवः श्राद्धोऽभवद् दीप्तिमान्
येन श्रीगुरुराजनन्दिमहसि द्रव्यव्ययो निर्ममे ।
कोटेः पादयुजः शराद्रि(७५)समये दुर्भिक्षवेलाकुले
सत्राकारविधानतो बहुजनाः संजीविता येन च ॥८॥
यद्वारे पुनरत्र सोमजि-शिवाश्राद्धौ जगद्विश्रुतौ
याभ्यां राणपुरस्य रैवतगिरेः श्रीअर्बुदस्य स्फुटम् ।
गौडी-श्रीविमलाचलस्य च महान् सङ्घोऽनघः कारितो
गच्छे लम्भनिका कृता प्रतिपुरं रुक्मार्द्धमेकं पुरम् ॥९॥
तेषां श्रीजिनचन्द्राणां शिष्यः प्रथमतोऽभवत् ।
गणिः सकलचन्द्राख्यो रीहडान्वयभूषणम् ॥१०॥

तच्छिष्यसमयसुन्दरसदुपाध्यायैर्विनिर्मिताऽध्यायैः ।
कल्पलतानामाऽयं ग्रन्थश्चक्रे प्रयत्नेन ॥११॥
प्रक्रिया-हैम-भाष्यादि पाठकैश्च विशोधिता(तम्) ।
हर्षनन्दनवादीन्द्रैश्चिन्तामणिविशारदैः ॥१२॥
कचित् सूत्र-वृत्त्योरनवबोधतो वा
किंचित् सूत्रपाठान्तरभ्रान्तिमत्वात् ।
कचिद् बुद्धिमान्द्याज्जिनाज्ञाविरुद्धं
मयाऽवाचि मिथ्याऽस्तु तद्दुःकृतं मे ॥१३॥
विषमं संस्कृतं भङ्क्त्वा सुगमं च मया कृतम् ।
सर्वत्र न कृतः सन्धिस्तत् सर्वं सुखबोधये ॥१४॥
सभासमक्षं व्याख्यानं कल्पसूत्रस्य दुष्करम् ।
केषाञ्चिदल्पबुद्धीनां बहूपायप्रलोकनात् ॥१५॥
कृत्वा तदनुकम्पां तां मया कल्पलता कृता ।
सुगमा तत एतस्यामेकस्यामेव कथ्यताम् ॥१६॥
लूणकर्णसरोग्रामे प्रारब्धा कर्तुमादरात् ।
वर्षमध्ये कृता पूर्णा मया चैषा रिणीपुरे ॥१७॥
राज्ये श्रीजिनराजसूरिसुगुरोर्बुद्ध्या जितस्वर्गुरो–
र्यद्भाग्यं भुवि लोकविस्मयकरं सौभाग्यमत्यद्भुतम् ।
कीर्तिस्तु प्रसरीसरीति जगति प्रौढप्रतापोदया–
ऽऽज्ञाऽत्युग्रतमाऽकृथाः तनुभृतां दारिद्र्यदुःखापहा ॥१८॥
श्रीमद्भानवडे च पुण्डरगिरौ श्रीमेडतायां पुनः
श्रीपल्लीनगरे च लोद्रनगरे प्रौढा प्रतिष्ठा कृता ।
द्रव्यं भूरितरं व्ययीकृतमहो श्राद्धैर्महत्युत्सवे
राजन्ते जिनराजसूरिगुरवस्ते सांप्रतं भूतले ॥१९॥
युवराजे जिनसागरसूरिवरे विजयिनि प्रकृतिसौम्ये ।
यत्सौभाग्ययशोभिर्धवलीकृतभूतलं भाति ॥२०॥
तद्गुरूणां प्रसादेन मया कल्पलता कृता ।
कल्पसूत्रमिदं यावत् तावन्नन्दतु साऽपि हि ॥२१॥

इति समयसुन्दरोपाध्यायविरचिता कल्पलतानाम्नी श्रीकल्पसूत्रस्य टीकेयं समाप्ता ॥

[ 100 ]

अन्तः–संवत् १५६२ वासठावर्षे मण्डपगढमहादुर्गे वास्तव्यऊकेशवंश-साहा नासणभार्या नायकदे–पुत्रसाहहीराकेन भार्याहर्षमदेयुतेन श्रीज्ञानपञ्चम्युद्या-पनकृते श्रीमहानिशीथि(थ)सूत्रं लिखापितम् ॥ शुभं भवतु ॥

[ 101 ]

इति श्रीमहानिसीह समाप्तः। मिति संवत् १९७३ अषाडशुदि २ ने शनिवार। लि० लहिया जोशी श्रीवल्लभ श्रीनागोरमध्ये।

शशि-वेदाङ्क-भू(१९४१)वर्षे गूर्जरे पुरि पट्टने।
गच्छस्तपोऽभिधो येनालङ्कृतो मेदभेदिना ॥१॥
मुनेस्तस्य सदाचारचर्णस्य मोहनप्रभोः।
शिष्यस्य पुस्तकं श्रीमद्धर्षनाम्नो मुनेरिदम् ॥२॥

[ 103 ]

अन्तः–इति श्रीयतिजीतकल्पवृत्तिर्जगत्प्रतीतश्रीतपागच्छाधिराजसुविहितशिरो-मणिभट्टारकप्रभुश्रीदेवसुन्दरसूरिशिष्यश्रीसाधुरत्नसूरिकृता ॥

वर्षे तर्क-शराब्धि-चन्द्र(१४५६)गणिते श्रीविक्रमार्काद् गते
गुर्वादेशवशाद् विलोक्य सकलाः कल्पादिशास्त्रावलीः।
सूरिश्रीयुतदेवसुन्दरगुरोः शिष्याग्रणीरातनो–
देतां श्रीयतिजीतकल्पविवृतिं श्रीसाधुरत्नाह्वयः ॥१॥

प्राज्ञैरुद्देशतो वृत्तौ ग्रन्थमानं विनिश्चितम्।
सहस्राः पञ्च श्लोकानां शतैः सप्तभिरन्विताः ॥२॥

ग्रन्था० श्लो० ५७०० ॥ श्रीः ॥

स्वस्ति श्रीप्रदवर्धमानभगवत्प्रासादविभ्राजिते
श्रीसंमेरपुरे सुरालयसमे प्राग्वाटवंशोत्तमः।
आभूर्भूरियशा अभूत् सुमतिभूर्भूमिप्रभुप्रार्चित–
स्तज्जातान्वयपद्मलासुररविः श्रेष्ठी महानासडः ॥१॥

सन्मुखो मोखनामा नयविनयविधिः सूनुरासीत् तदीय–
स्तद्भ्राता वर्धमानः समजनि जनतासुखसौजन्यमान्यः।
अन्यूनान्यायमार्गापनयरसिकरस्तत्सुतश्चण्डसिंहः
सप्तासँस्तत्तनूजाः प्रथितगुणगणाः पेथडस्तेषु पूर्वः ॥२॥

नरसिंह रत्नसिंहौ चतुर्थमल्लस्ततस्तु मुञ्जालः ।
विक्रमसिंहो धर्मेण इत्येतेऽस्यानुजाः क्रमतः ॥३॥

संडेरकेऽणहिलपाटकपत्तनस्यासन्ने य एव निरमापयदुच्चचैत्यम् ।
स्वस्वैः स्वकीयकुलदैवतवीरसेनक्षेत्राधिराजसतताश्रितसंनिधानम् ॥४॥

वासावनीनेन समं च जाते कलौ कुतोऽस्थापयदेव हेतोः ।
बीजापुरक्षत्रियमुख्यबीजासौहार्दतो लोककरार्द्धकारी ॥५॥

अत्र रीरीमयज्ञातनन्दनप्रतिमान्वितम् ।
यश्चैत्यं कारयामास लसत्तोरणराजितम् ॥६॥

योऽकारयत् सचिवपुङ्गववस्तुपालनिर्मापितेऽर्बुदगिरिस्थितनेमिचैत्ये ।
उद्धारमात्मन इव ब्रुडतो ह्यपारसंसारदुस्तरणवारिधिमध्य इद्धः ॥७॥

गो ऽत्रैवाथाप्तबिम्बं भीमसाधुविधित्सितम् ।
यं पित्तलमयं हैमदढसंधिष्वकारयत् ॥८॥

चरमजिनवरेन्द्रस्फारमूर्तिं विधाप्य
गृहजिनवसतौ प्रातिष्ठिपत् शुद्धलग्ने ।
पुर उरुतरदेवौकःस्थितायां च तस्यां
समहमतिलघोः श्रीकर्णदेवस्य राज्ये ॥९॥

ख-रस-समय-सामे (१३६०) बन्धुभिः षड्भिरेव
सममिह सुविधीनां साधने सावधानः ।
विमलगिरिशिरःस्थादीश्वरे चोज्जयन्ते
यदुकुलतिलकाभं नेमिमानम्य मोदात् ॥१०॥

निजमनुजभवं यः सार्थकं स्राक् चकार
विहितगुरुसपर्यः पालयन् सांघपत्यम् ।
कलसकलकलासत्कौशली निष्कलङ्कः
पुनरपि षडकार्षीद् यो हि यात्रास्तथैव ॥११॥ त्रिभिः कुलकम् ॥

मुनि-मुनि-यक्ष (१३७७) मितेऽब्दे दुर्भिक्षविलक्षदीनजनलक्षान् ।
वीक्ष्यातुलधन्यानां दानात् स्वस्थांश्च यः कृतवान् ॥१२॥

समयश्रुतिफलमतुलं स्वगुरोर्योऽथैकदाऽवबुध्य सुधीः ।
सकलं विमलं सततं सदागमं श्रावय मम त्वम् ॥१३॥

इत्यर्थिवाँस्तस्मै गुरौ प्रवृत्तेऽकरोत् तथाकर्तुम् ।
तद्गमवीर-गौतमनामाऽर्चा रैरजतटङ्कैः ॥१४॥

तेनार्हणा घनेनाऽक्षयदासौक्तिकोशसुचतुष्कम् ।
सत्यादिसूरिवचनात् क्षेत्रनवक उप्तवान् वित्तम् ॥ १५॥ त्रिभिः कुलकम् ॥

तत्तनयः पद्माह्वस्तदुद्वहो लाडणस्तदङ्गभवः ।
अस्ति स्माह्णसिंहस्तदङ्गजो मण्डलिकनामा ॥१६॥

श्रीरैवतार्बुदसुतीर्थमुखेषु चैत्योद्धारानकारयदनेकपुरेष्वनल्पैः ।
न्यायार्जितैर्धनभरैर्वरधर्मशालां यः सत्कृतो निखिलमण्डलमण्डलीकैः ॥१७॥

वसु-रस-भुवन(१४६७)प्रमिते वर्षे विक्रमनृपाद् विनिर्जितवान् ।
दुष्कालं समकालं बहुधान्यानां वितरणाद् यः ॥१८॥

वर्षेषु सप्त-सप्तत्यधिकचतुर्दशशतेषु (१४७७) यो यात्राम् ।
देवालयकलितां किल चक्रे शत्रुञ्जयाद्येषु ॥१९॥

श्रुतलेखन-संघार्चाप्रभृतीनि बहूनि पुण्यकार्याणि ।
योऽकार्षीद विविधानि पूज्यजयानन्दसूरिगिरा ॥२०॥

व्यवहारिठाईआख्योऽभूद् दक्षस्तत्तनुज एव विजिताक्षः ।
वरमणकाईनाम्नी सत्त्ववती जन्यजनि तस्याः ॥२१॥

तत्कुक्ष्यनुपममानसकासारसितच्छदास्त्रयः पुत्राः ।
अभवन् श्रेष्ठाः पर्वत-डुंगर-नरबदसुनामानः ॥२२॥

तेष्वस्ति पर्वताख्यो लक्ष्मीकान्तः सहस्रवीरेण ।
पोइआप्रमुखकुटुम्बैः परीवृतो वंशशोभाकृत् ॥२३॥

डुंगरनामा द्वितीयः स्वचारुचातुर्यवर्यमेधावान् ।
पत्नीमंगादेवीरमणः काह्वाख्यसुतपक्षः ॥२४॥

स्वकारितार्हत्प्रतिमाप्रतिष्ठां विधाप्य तौ पर्वत-डूंगराभिधौ ।
वर्षे हि नन्देषु-तिथौ (१५५९) च चक्रतुः श्रीवाचकस्थापनसन्महोत्सवम् ॥

ऋतु-तिथि(१५६०)समायां यात्रां तौ चक्रतुः सुतीर्थेषु ।
जीरापल्लीपार्श्वार्बुदाचलाद्येषु सोल्लासम् ॥२६॥

गन्धारमन्दिरे तौ अलमल्लयुगलादिसमुदयोपेताः ।
श्रीकल्पपुस्तिका अपि दत्वाऽखिलसर्वशालासु ॥२७॥

कृतसंघसत्कृती चावाचयतां तौ च रूप्यनाणकयुग् ।
ददतुश्च सितापुञ्जं समस्ततन्नागरिकवणिजाम् ॥२८॥
कृतवन्तावित्यादिविहितचतुर्थव्रतादरौ सुकृतम् ।
आगमगच्छेशश्रीविवेकरत्नाख्यगुरुवचनात् ॥२९॥
अथोत्तमौ पर्वत-काह्ननामकौ सार्थोद्यमौ सूरिपदप्रदापने ।
आकारितानां च समानधर्मिणां नानाविधस्थानसमागतानाम् ॥३०॥
पुंसां दुकूलादिकदानपूर्वकं समस्तसद्दर्शनसाधुपूजनात् ।
महामहं तेनतुरुत्तरं तौ पवित्रचित्तौ जिनधर्मवासितौ ॥३१॥ युग्मम् ॥
आगमगच्छविभ्रतां सूरिजयानन्दसद्गुरोः क्रमतः ।
श्रीमद्विवेकरत्नप्रभसूरीणां सदुपदेशात् ॥३२॥
शशि-मुनि-तिथि(१५७१)मितवर्षे समप्रसिद्धान्तलेखनपराभ्याम् ।
व्यवहारिपर्वत-काहाभ्यां सुकृतरसिकाभ्याम् ॥३३॥
निजमानसमोदभरादलेखि निर्मलविचित्ररचनाढ्या ।
यतिजीतकल्पवृत्तिर्जिनोदितार्था जयतु सेयम् ॥३४॥ त्रिभिर्विशेषकम् ॥
[अन्यदीयहस्तेनोल्लिखितं यत्—]
संविग्नेनान्तिषदा तपगणपतिविजयसेनसूरीणाम् ।
श्रीरामविजयकृतिना चित्कोशे प्रतिरियं मुक्ता ॥१॥

[ 117 ]

अन्तः— प्रत्याख्यानस्य निर्युक्तिः स्फुटार्था प्रकटीकृता ।
यथावृत्ति सुबोधैषा विद्वद्भिर्मलकीर्तिभिः ॥१॥

प्रशस्तिः— अस्ति प्रशस्तरत्नौघः सदाचारपयोधरः ।
पुरुषोत्तमसंसेव्यश्च श्रीराजगणसागरः ॥१॥
यत्रासन्नधुनासमबलिना भूमण्डलस्वामिना
श्रीमद्वीरमते सतामभिमते स्पष्टं समुत्त्रासिते ।
जाग्रद्विष्णुकुमारवद्युगवरा रक्षाकराः प्रस्फुरत्—
पक्षाः श्रीजिनचन्द्रसूरिगुरवो मान्याः समैः सूरिभिः ॥२॥
तत्पट्टे गतसंकटे त्रिजगतीमाच्छादयन्तः स्वकै—
रच्छा तुच्छसमुच्छलत्त्रिपथगा डिण्डीरपिण्डोपमैः ।

शोभासुन्दरतोत्कटैर्गुणपटैः कुर्वन्ति राजन्वतीं
श्रीमच्छ्रीजिनसिंहसूरिगुरवस्तैर्थंकरीं संततिम् ॥३॥

अकबरनृपसंसल्लब्धवादीन्द्रनादाः
प्रहतकुमतलोकप्रोक्तयुक्तिप्रवादाः ।
खरतरविधिपक्षे पाठकाः साधुकीर्ति-
गणय उरुगुणौघैः शोभयामासुरत्र ॥४॥

तेषां शिष्याः प्रथमे प्रथमे सर्वेषु बुद्धिकार्येषु ।
विद्वद्विमलतिलकगणिनामानः सन्ति भूरिगुणाः ॥५॥

स्फीतालंकृतिरूपरीतिरमयुग्भाषागुणव्याकृति-
विद्याहृद्यवधूपभोगरसिकाः शिष्याः द्वितीयाः पुनः ।
एते वाचकसाधुसुन्दर इति प्रख्यातगोत्राश्चिरं
जीयासुः कृतनव्यशास्त्ररचना सर्वाद्यसिद्धान्तिनः ॥६॥

शिष्यस्तयोर्विमलकीर्तिमुनिश्चकार बालावबोधमिह देव-गुरुप्रसादात ।
आलोक्य वृत्तिमखिलामपि हारिभद्रीं टीकामभिज्ञतनुबुद्धिजनोपकृत्यै ॥७॥

शास्त्रान्तराणि दृष्ट्वा न कं (?, चैव चारुलघुटीकाम् ।
व्याख्याताः प्रक्षिप्ता गाथाः काश्चित् क्वचित् स्थाने । ८॥

मान्द्यबुद्धेर्गौरवादर्थवृत्तेर्गभीरत्वादस्या[--]शास्त्रस्य कर्तुः ।
दोषश्चेत् स्याच्छोधनीयः सुधीभिर्हास्यः कार्यो नैव वार्ता विदित्वा ॥९॥

यदपि गदितमस्मिन स्पष्टमावश्यकेऽर्थ-
वचनमधिकगाथाक्षेपकैर्दुर्गमार्थे ।
सदसदिति विचारज्ञैर्बुधैः शोधनीयं
नहि विदधति तन्द्रां सज्जना अन्यकार्ये ॥१०॥

भराम्भोधि-रसेन्दुमान(१६७१)वर्षे सहर्षे वरपोषमासि ।
समाप्तो विहितस्तृतीयाशुद्धे दिने शान्तिजिनप्रसादात् ॥११॥

गगनशृङ्गारौ पुष्पदन्तौ विराजतः ।
तामेष वाच्यमानो बुधैर्जनैः ॥१२॥

निर्युक्तिसूत्राक्षरार्थः समाप्तः ॥

[ 130 ]

अन्तः—इति श्रीषडावश्यकसूत्रं टबार्थं संपूर्णम् ॥

प्रशस्तिः—वर्षे चन्द्र-जनार्दनप्रियतमापुत्राशुगर्षि-क्षमा(१७५१)—

मेये श्रीविजयादिमानगणभृद्राज्ये प्रदीपोत्सवे।

प्राज्ञश्रीसुयशोऽन्वितस्य विजयस्यामुं षडावश्यका—

र्थोद्योगं कृतवान् जिनादिविजयोऽन्तेवासी मुख्यः सुधीः ॥१॥

सम्यक्त्वशुद्धव्रतधारिकायाः रूपाभिधायाः प्रचुराग्रहाच।

आर्यां प्रति दर्शननामधेयः शिष्यो लिलेखार्कपुरे मुदाऽथ ॥२॥

इति श्रीषडावश्यकसूत्रं सटबार्थं संपूर्णं जातम् ॥

[ 132 ]

अन्तः—संवत् १८४५ वर्षे मासोत्तममासे चैत्रमासे शुक्लपक्षे तिथिरूप्तमी-वारगुरौ श्रीसुमतिनाथप्रसादात्। श्रीरस्तु।

सकलपण्डितशिरोमणिपण्डितश्री ५ श्रीवृद्धिविजयगणि-तत्शिष्यप्रवरपण्डितश्री ५-श्रीमाणिक्यविजयगणि-तत्शिष्यपं० मेघविजयगणिः तत्शिष्यपं० उत्तमविजयगणि-गुरुभाइ पं० केसरविजय तथा भाई मुक्तिविजयग०

संवत् १८४५ वर्षे चइत्रमासे शुक्लपक्षे तिथि ७ सातम वार गुरु श्रीसुमति-नाथप्रसादात् ॥

[ 133 ]

अन्तः—इति षड्विधावश्यकविधिः समाप्तेति भद्रम्।

संवत् १४८३ वर्षे भाद्रपदशुदि ७ लिखितमिदम्।

यस्य चित्तं द्रवीभूतं कृपया सर्वजन्तुषु।

तस्य ज्ञानं च मोक्षं च किं जटा-भस्म-वल्कलैः ॥१॥

वृद्धनगरवासिन्या श्रा० हांसूनाम्न्या ऊकेशलोकोद्भवया लेखितम्। ग्रन्थाग्रम् २७२०॥

[ 148 ]

अन्तः—ग्रन्थाग्रम् १२७०। ए पुस्तक श्रीनवासेरके श्रावक बक्ताबरम[ल]जी केशरीमलजी श्रीजेतारणभंडारमे जुनि पुस्तक सं० १६६१ की लखेली तेन उपर लखवायके श्री १००८ श्रीमोहनलालजी महाराजके शिष्य श्रीमत्तपागच्छा-धिराज श्रीजगत्प्रसिद्ध पंन्यासजी महाराज हरखमुनिजीकुं ए पुस्तक भेट किया है। पंन्यासजीका चतुर्मास श्रीनवासेरमां हुवा हे। ए वर्षमां मारवाडकी जात्रा

हुई छे। सं० १९७१ महा(माह)शुक्लपक्ष ६। लि० लहिया जोशी श्रीवल्लभः श्रीनागोरमध्ये। महाराजजीकी साथमां शिष्य २ मुनिराज नागोर आया था। मुनि श्रीचतुर मुनि श्रीक्षांती(ति)मुनिजी। अब काल दिवस श्रीबीकानेरकी तरफ विहार करणका भाव हे। शुभं भवतु। कल्याणमस्तु। श्रीनागोरमां जैन श्वेतांबर मंदिर ६ हे, जिसमें पूजा दिवस ८ सुधी बोत अच्छी तरहसे हुई। महाराजजी नागोरमां दिवस २५ रया। श्रावक लोगाकुं धर्मउपदेश दिया ॥श्री॥

[155]

अन्तः—इति पाक्षिकक्षामणटबार्थो लिखितः।

श्रीज्ञानविमलसूरिप्रसादमासाद्य वार्त्तिकं लिखितम्।
बुधदीपसागरशिशुना सुखसागरज्ञेन ॥१॥

यावच्चरमसमुद्रो यावन्नक्षत्रमण्डितो मेरुः।
यावच्च पुष्पदन्तौ रसपूर्णैस्तान् सुदग् (?) ॥२॥

ग्रन्थाग्रमानमुदितं पञ्चसहस्रं चतुःशतीयुक्तम्।
गुण-मुनि-मुनि-विधु(१७७३)वर्षे माघे मासेऽष्टमीघस्रे ॥३॥

इति पाक्षिकसूत्र–टबार्थ–बालावबोध संपूर्णम्। लिखितं पं० कुशलकल्याणेन॥

सं० १८३७ मिति कार्तिककृष्णत्रयोदश्यां विक्रमपुरे वाच्यमानं चिरं जीयात्। श्रीरस्तु॥

[169]

अन्तः—सकलवाचकचक्रचूडामणी महोपाध्याय श्री १०८ श्रीसकलचन्द्रगणी तत्सुविनीतमहोपाध्याय श्री १०८ श्रीसूरचन्द्रगणी-तत्-शिष्य शत्रुञ्जयकरमोचनाद्यनेकसुकृतकृत्यततिकारकपातिसाह श्रीजिहांगीरप्रतिबोधकमहोपाध्याय श्री १०५ श्रीभानुचन्द्रगणि-तत्शिष्य-सकलपण्डितशिरोमणी पं० श्रीभावचन्द्रगणीशिष्यमण्डली-मण्डनपण्डित श्री १०५ कनकचन्द्रगणी-तत्शिष्यपण्डित श्री पं० कपूरचन्द्रगणी-तत्शिष्यपण्डित श्री७ श्रीरविचन्द्रगणी-तत्शिष्यपण्डितश्रीमनोज्ञचन्द्रगणि-तत्शिष्यपण्डितश्री-पं० प्रेमचन्द्रगणि-तत्शिष्यपण्डितश्री पं० भुवनचन्द्रगणी-तत्शिष्यसुविनीतपं० लक्ष्मीचन्द्रगणिलिपीकृता श्रीपार्श्वनाथप्रसादात् राणाराजसिंघराज्ये श्रीदीर्घायुः॥

[171]

अन्तः—अथ प्रशस्तिमाह—

हरिभद्रकृता टीका वर्तते विषमा परम्।
मया तु शीघ्रबोधाय शिष्यार्थं सुगमा कृता ॥१॥

चन्द्रकुले श्रीखरतरगच्छे जिनचन्द्रसूरिनामानः ।
जाता युगप्रधानास्तच्छिष्यः सकलचन्द्रगणिः ॥२॥
तच्छिष्यसमयसुन्दरगणिना चक्रे च स्तम्भतीर्थपुरे ।
दशवैकालिकटीका शशि-निधि-शृङ्गार(१६९१)मितवर्षे ॥३॥
अर्थस्यानवबोधेन मतिमान्द्यान्मतिभ्रमया ।
जिनाज्ञाविपरीतं यत्तन्मिथ्यादुष्कृतं मम ॥४॥
ममोपरि कृपां कृत्वा शोधयन्तु बुधा इमाम् ।
परोपकरणे यस्मात् तत्परा उत्तमा नराः ॥५॥
टीकाकरणतः पुण्यं यन्मयोपार्जितं भवेत् ।
तेनाहमिदमिच्छामि बोधिरस्तु परत्र मे ॥६॥
शब्दार्थवृत्तिटीकायाः श्लोकमानमिदं स्मृतम् ।
सहस्रत्रयमग्रे च पुनः सार्धचतुःशतीम् ॥७॥

इति श्रीदशवैकालिकशब्दार्थवृत्तिः श्रीसमयसुन्दरोपाध्यायविरचिता समाप्तेति ॥

[ 177 ]

अन्तः— श्रीमत्तपागणनभोऽङ्गणभास्कराभ-श्रीदेवसुन्दरयुगोत्तमपादुकानाम् ।
शिष्यैर्जिनागमसुधाम्बुधिलीनचित्तैः श्रीज्ञानसागरगुरूत्तमनामधेयैः ॥
विधि-वह्नि-मनु(१४३१)मितेऽब्देऽवचूर्णिरेषा कृतौघनिर्युक्तेः ।
स्वपरोपकृतिकृते तद्वृत्तेरुपरि स्फुटा जयतात् ॥२॥

[ 184 ]

अन्तः— लिखितं पत्तननगरे ॥ इति श्रीजिनप्रभसूरिविरचिता महायमकमया चतुर्विंशतितीर्थङ्करस्तवनावचूरिः । यादृशं० ॥

लिखितागममाणिक्यमुनिना । श्रीतपागच्छनायकभट्टारकप्रभुसुविहिताचार्यशिरः-शेखरपरमपरमाराध्यश्रीरत्नशेखरसूरिपट्टपूर्वाचलप्रभाकरश्रीलक्ष्मीसागरसूरिशिष्यविबुधाव-तंस-पं० जिनहंसगणिविजयराज्ये ॥४॥

[ 190 ]

[प्रत्यन्तेऽन्यदीयहस्तेन लिखितमिदम्— ]
संविग्नान्तिषदा तपगणपतिविजयसेनसूरीणाम् ।
श्रीरामविजयकृतिना चित्कोशे प्रतिरियं मुक्ता ॥१॥

[ 191 ]

अन्तः—इति श्रीमद्वृद्धपण्डितश्री५ श्रीदेवविजयगणिशिष्यपं० जयविजय-गणिविरचितायां श्रीशोभनस्तुतिवृत्तौ श्रीवर्धमानस्वामिनः व्याख्या ॥२५॥ इति शोभनस्तुतिवृत्तिः संपूर्णा । अथ प्रशस्तिः—

श्रीविजयसेनसूरीश्वरस्य राज्ये सुयौवराज्ये तु ।
श्रीविजयदेवसूरेरिन्दु-रसाब्धीन्दु(१७६१)मितवर्षे ॥१॥
समधीत्य वाचकेन्द्रश्रीमत्कल्याणविजयगणिशिष्यात् ।
श्रीधर्मविजयवाचकशिरोमणेः श्रुतनिधेः किञ्चित् ॥२॥
श्रीदेवविजयविदुषां शिष्योऽकृत शोभनस्तुतेर्वृत्तिम् ।
जयविजयः सुखबोधामल्पमतीनुपचिकीर्षुरिमाम् ॥३॥
श्रीशोभनस्तुतेर्वृत्तेः ग्रन्थाग्रं प्रतिपाद्यते ।
पञ्चाशत्त्रिशतीयुक्तं सहस्रद्वितयं मया ॥४॥

इति प्रशस्तिः । ग्रन्थाग्रम् २३५०, इति शोभनस्तुतिवृत्तिः ॥

[ 223 ]

अन्तः—श्रीलघुशान्तिस्तवटीका रचिता हर्षकीर्तिसूरिवरैः ।
श्रीभावसकलवचसा वचसा युग-देव-नृप(१६४२)वर्षे ॥१॥
बृहद्गच्छाब्धिशीतांशुमानदेवगुरोः कृतौ ।
चतुर्थे स्मरणे टीका कृता शान्तिस्तवाभिधे ॥२॥

श्रीमन्नागपुरीयतपागच्छेशश्रीहर्षकीर्तिसूरिविरचिता लघुशान्तिस्तवटीका संपूर्णा । राजनगरमध्ये चिन्तामणिप्रसादात् । पं० भावविजयगणिलिखितं चिरं जीयात्, संविज्ञपक्षीय पं० सागरीय........वाचनार्थम् ॥

[ 227 ]

अन्तः—इति श्रीमन्नन्दिषेणमुनिप्रणीतः अजितशान्तिस्तवः संपूर्णः, लिखितोऽयं हंसरत्नेन स्ववाचनकृते संवत् १७५६ वर्षे पोषवदि ११ शुक्रे श्रीमद्भर्तृपुरमध्ये लिखितः ॥

लिखितेयं श्रीमत्तपगणतरणिप्रकल्पप्रभुश्रीराजविजयसूरीश्वरान्वयक्रमप्रचुराणां महोपाध्यायश्री ५ श्रीहर्षरत्नगणीनां शिष्यवराः गणेशश्रीलक्ष्मीरत्नगणयस्तच्छिष्याश्चारित्रचूडामणयः गणेशश्रीज्ञानरत्नजितस्तेषां चरणकमलसेविना हंसरत्नेन लिखितेयमजितशान्तिस्तवावचूरिः । प्राक्तनपुस्तकानुसारेण लिखिता तथापि सुधीजनैः स्व-परोपकाराय विशोध्या ॥

[ 240 ]

अन्तः—श्रीखरतरगच्छेशश्रीमज्जिनभद्रसूरिशिष्याणाम् ।
जीरापल्लीपार्श्वप्रभुलब्धवरप्रसादानाम् ॥१॥

श्रीम्यासदीनसाहेमहासमालब्धवादिविजयानाम् ।
श्रीसिद्धान्तरुचिमहोपाध्यायानां विनयेन ॥२॥
श्रीसाधुसोमगणीशेनाक्लेशेनार्थप्रबोधिनी ।
श्रीवीरचरिते चक्रे वृत्तिश्चित्तप्रमोदिनी ॥३॥
मतिमान्द्यान्मोहाद् वा प्रमादतो वात्र किञ्चनापि मया ।
यत् सूत्रितमुत्सूत्रं वा तन्मिथ्यादुःकृतं मेऽस्तु ।
अत्रानागमिकं युक्तिरिक्तं वा यत् पदं क्वचित् ।
विद्वद्भिरभितः सद्भिस्तच्छोध्यं शुद्धबुद्धिभिः ॥५॥
जिनवल्लभसूरीन्द्रसूक्तिमौक्तिकपङ्क्तयः ।
दर्शिता वा सुदृष्टानां सुखग्राह्या भवन्त्विति ॥६॥
वाच्या चरित्रपञ्चकवृत्तिर्विहिता नवैक तिथि(१५१९)वर्षे ।
हर्षेण महर्षिगणैः प्रवाच्यमानश्चिरं जयतु ॥७॥

[ 245 ]

अन्तः—इति मन्नह जिणाणमाणं इति कुलकस्य वृत्तिर्नटीपद्रनगरे तपागच्छाधिराजश्रीहेमविमलसूरिविजयराज्ये पौषमासे शुक्लपक्षे प्रतिपद्दिने बुधे सकलानूचानशिरोवतंसस्वयशोनिर्जितराजहंसश्रीजिनहंससूरिशिष्यभुजिष्येण पं० राजमाणिक्यगणिना स्वपरोपकारविनोदाय सादरं लिखिता ।

यह ग्रंथ मुनिमहाराज श्रीमोहनलालजी महाराजना शिष्य पंन्यासजी श्रीहरखमुनिजी महाराजने अर्थे शहेर मुंबईमध्ये लालबागमां लिखी छे । शुभं भवतु ।

संवत् १९६६ ना महा वदी ७ गुरुवारे संपूर्णम् । लिपीकृत लहीया लक्ष्मीराम अम्बाराम, गढडावाला ॥

[ 249 ]

अन्तः—इति चतुश्चत्वारिंशद्वृत्तार्थः संपूर्णस्तत्संपूर्तौ संपूर्णेयं भक्तामरस्तववृत्तिः सप्रभावकथानकसंयुक्ता ।

गिरां गुम्फधात्री कवीन्द्रेषु वाणी चतुर्वर्णवर्ण्यश्चतुर्वर्णसंघः ।
गुरुश्चानुशास्ता सुधीः श्रनृवर्गो जयेयुर्जगत्याममी आसमुद्रम् ॥१॥
श्रीचन्द्रगच्छेऽभयसूरिवंशे श्रीरुद्रपल्लीयगणाब्धिचन्द्राः ।
श्रीचन्द्रसूरिप्रवरा बभुस्ते यद्भ्रातरः श्रीविमलेन्दुसंज्ञाः ॥२॥
तत्पट्टे जिनभद्रसूरिगुरवः सल्लब्धिलब्धप्रभाः
सिद्धान्ताम्बुधिकुम्भसंभवनिभाः प्रेङ्खन्मनीषाः शुभाः ।

जातः श्रीगुणशेखराभिधगुरुस्तस्मात्तपोनिर्मल—
शीलः श्रीतिलको जगत्तिलक इत्यासीद् गुरुग्रामणीः ॥३॥

सद्गद्य-पद्यसुकविः कवितत्त्वधाता
चारित्रचारुकरुणाकरुणास्तकामः ।
तत्पट्टभूषणमणिर्गतदूषणोऽभूत्
श्रीमान् मुनीन्द्रगुणचन्द्रगुरुर्गरिष्ठः ॥४॥

संप्रत्यवनौ जयिनां निर्देशादभयदेवसूरीणाम् ।
गुणचन्द्रसूरिशिष्यो गुणाकरः सूरिरल्पमतिः ॥५॥

अद्भुतमहतीर्दधतीः बहुश्रुतमुखश्रुताः प्रभावकथाः ।
भक्तामरस्तवस्याभिनवां वृत्तिं व्यधादेनाम् ॥६॥

वर्षे षड्विंशाधिकचतुर्दशशती(१४२६)मिते च ।
वर्षर्तौ मासि नभस्ये रचिता सरस्वतीपत्तने वृत्तिः ॥७॥

यद् गदितमर्थकूटं यल्लक्षणशब्दतश्च दुष्टमिह ।
तत् साधुभिः सुधीभिः शोध्यं सद्यः प्रसद्य मयि ॥८॥

भक्तामरस्तवाक्षरवृत्तिं कृत्वा यदर्जितं सुकृतम् ।
तेनासौ सुकृतिजनो निरामयः स्यात् सदानन्दी ॥९॥

पञ्चदशशतान्यत्र द्वासप्ततिः समधिकानि गणितानि ।
शेषवर्णवृन्दान्यनुष्टुभां प्रायशः सन्ति ॥१०॥

ग्रन्थाग्रम् १५७२ । सकलाक्षरसंपूर्णश्रीभक्तामरस्तववृत्तिः समाप्ता ॥

[ 250 ]

अन्तः—श्रीमत्तपगणगगनाङ्गणदिनमणिहीरविजयसूरीणाम् ।
शिष्याणुना विरचिता वृत्तिरियं कनककुशलेन ॥१॥

नयन-शर-रसेन्दु(१६५२)मिते वर्षे वैराटनाम्नि वरनगरे ।
बालजनविबोधार्थं विजयदशम्यां हि ससमासा ॥२॥ युगलम् ।

श्लोकानां षट्शती षोडशोत्तरा समजायत ।
प्रत्यक्षरं गणनया वृत्तौ संख्या निगदिता ॥३॥

अङ्कतोऽपि ६१६ । सूत्रसहितवृत्तेः ग्रन्थाग्रम् ६९३॥

इति भक्तामरस्तोत्रवृत्तिः संपूर्णा ।

स्वस्ति श्रीसंवत् १७१२ वर्षे मधुमासे शुभ्रपक्षे १४ तिथौ तरणितनयघस्रे श्रीमद्राजद्रङ्गे श्रीमत्तपगणगगनगभस्तिभट्टारकपुरन्दरप्रभुश्री ५ श्रीहीररत्नसूरिवरविनेय-वरिष्टपंन्यासश्री ५ श्रीलाभविजयगणि-तत्शिष्यग० प्रेमविजयेन लिपीचक्रे तत्-शिष्यमुनिश्रीधर्मविजयपठनाय श्रीराजनगरे लिपीकृतोऽयम् ।

[ 347 ]

**अन्तः**—संसारभस्मसारवृत्तिः संपूर्णा ।

शशि-वेदाङ्क-भूवर्षे (१९४१) गुर्जरे पुरि पट्टने ।
गच्छस्तपोऽभिधो येनालङ्कृतो भेदमेदिना ॥१॥
मुनेस्तस्य सदाचारचर्णस्य मोहनप्रभोः ।
शिष्यस्य पुस्तकं श्रीमद्धर्षनाम्नो मुनेरिदम् ॥२॥

सं०१९७१ फाल्गुणमासे शुक्लपक्षे ५ । लि० लहिया श्रीवल्लभ जोशी । श्रीनागोरमध्ये । शुभं भवतु ॥

[ 375 ]

**अन्तः**—नन्द-रस-सिद्धि-चन्द्रप्रमिते वत्सरे वरे ।
इयं व्याख्या गुणिग्राह्या चैत्रशुक्लाऽष्टमीतिथौ ॥१॥
दुर्गे जेशलमेरौ च कृतवाससुशोभिना ।
गणिनाऽमरचन्द्रेण वाचकेन सुसाधुना ॥२॥
तच्छिष्यजीवराजेन कृता व्याख्या मनोरमा ।
चैत्रशुक्लपूर्णिमायाः कान्तिरत्नसहायतः ॥३॥ —त्रिभिर्विशेषकम् ।

इति श्रीचैत्रशुक्लपूर्णिमाव्याख्यानं समाप्तं संपूर्णम् । ल० पं० लक्ष्मीवीजे ॥

[ 378 ]

**अन्तः**—स्वस्ति श्रीसंवत् १६३० वर्षे वैशाखवदिद्वादशीसोमवासरे श्रीमालवा-मध्ये श्रीसारंगपुरनगरे श्रीमत्तपागच्छे श्रीहीरविजयसूरिविज[य]राज्ये पं० श्री-देवविजयगणिभिर्लिखितं स्वश्रेयसे ॥ यादृशं० ॥

[ 401 ]

**अन्तः**—संवत् १८८६ रा वर्षे शाके १७५१ प्रवर्तमाने मासोत्तम-मासे माघमासे शुक्लपक्षे तिथौ द्वितीयादिवसे मङ्गलवारे लि० पं० जिनविजयेन लिपीकृतं जगतारणीमध्ये । सकलपण्डितशिरोमणि श्री श्री १०८ श्रीगोविन्दविजयजी तत्शिष्यमोहणविजय स्ववाचनार्थं श्रीऋषभदेवजीप्रसादात् ॥ यादृशं० ॥

तरसतहुं तुम मिलनकुं, पल नही पावूं चैन ।
सजन दरस दीखावीयो, तब सुख पावै जीव ॥

[ 425 ]

अन्तः—स्वस्ति संवत् १५३८ वर्षे फाल्गुनवदि १० गुरौ । श्रीप्राग्वाटवंशे परी० वइजाभार्या लांपूसुतपरी० सहदे[व]सुश्रावकेण भार्या[लीलाइपुत्ररत्नपरी० अर्जुनभार्यासाधसहितेन श्रीउपदेशमालावृत्ति-कर्णिकाभिधा लिखिता, साधुभिर्वाच्यमाना चिरं विजयताम् । ]

[ 439 ]

श्रीवर्द्धमान इति चन्द्रकुलाम्बरार्कस्तस्माज्जिनेश्वरमुनीश्वर एव जज्ञे ।
रङ्गन्नवाङ्गविवृतिप्रथनप्रसिद्धमाहात्म्यभूरभयदेवगुरुस्ततश्च ॥१॥
सूरिर्बभूव जिनवल्लभनामधेयस्तत्पादपद्ममधुकृज्जिनशेखराख्यः ।
पद्मेन्दुबिन्दुनिभकीर्तिभरो बभूव सूरिस्ततो यतिपतिर्विजयेन्दुनामा ॥२॥
तस्माद् बभूवाभयदेवसूरिर्विध्वस्तविस्तारिकुवादिगर्वः ।
श्रीदेवभद्रोऽथ कृतोरुभद्रस्ततः प्रभानन्दमुनीश्वरश्च ॥३ ।
श्रीचन्द्रसूरिः सुगुरुस्तदीये पट्टावतंसप्रतिमोऽधुनाऽस्ति ।
अस्य द्वितीयस्तु धियाऽद्वितीयो जज्ञे मुनीन्द्रो विमलेन्दुनामा ॥४॥
आचार्यधुर्यत्वमप्रापिता श्रीः श्रीचन्द्रसूरिप्रवरैस्तु योगी ।
श्रीचारुचन्द्रो जिनभद्रसूरिर्गुणाम्बुधिः श्रीगुणशेखरश्च ॥५॥
एतैरेव वितीर्णोपाध्यायोपपदो मुनीश्वरोत्तंसैः ।
श्रीदेवभद्रयतिपतिशिष्यः श्रीश्रीतिलकनामा ॥६॥
गौतमपृच्छाप्रकरणविवरणमिदमल्पबुद्धिविभवोऽपि ।
भव्यजनोपकृतिकृतये कृतवानभ्यर्थिनः कृतिभिः ॥७॥
छन्दोलक्षणमुख्यैर्दोषैर्यद् दुष्टमस्ति किमपीह ।
तदखिलमपि मदनुग्रहबुद्धया शोध्यं सुधीमद्भिः ॥८॥
गगनतले परिखेलति यावज्ज्योतिष्कचक्रमखिलमपि ।
नन्द्याद् गौतमपृच्छाप्रकरणविवरणमिदं तावत् ॥९॥
कल्याणाचलभूर्विकासिसुमनःश्रेण्याऽभितः संश्रितः
सेव्यः सर्वसुपर्वभिः स्फुटतमोन्नत्यः प्रसत्त्यद्भुतः ।
सच्छायाचयचारुरुद्यदसमप्रेङ्खत्फलर्द्धिः पदं
नन्द्याद् वस्तदनल्पकल्पितमहश्रीसङ्घकल्पद्रुमः ॥१०॥

[ 444 ]

स्वस्ति संवत् १५७० वर्षे आषाढादि ७१ वर्षे माहमासे शुक्लपक्षे चतुर्थी-गुरौ श्रीऊकेशगच्छे श्रीसिद्धाचार्यसंताने पूज्यभ० श्रीसिद्धसूरि–श्रीकक्कसूरि- श्रीदेवगुप्तसूरि-उपाध्यायश्रीमतिसागरान्वये पूज्यभ० श्रीधनवर्द्धनसूरि-श्रीदेवगुप्तसूरि-तत्पट्टोद्द्योतकारकप्रभुपुरन्दरपूज्यभट्टारकश्रीकीर्तिभूषणस्य श्रीसिद्धसूरिपट्टमृन्नाम – तच्छिष्यगुणमणिरत्नभूधरसद्दशपण्डितश्रीकीर्तिकलशेन वाचनाय लिखिताऽस्ति ॥

प्रत्यक्षरं गणनया ग्रन्थमानं विनिश्चितम् ।
अनुष्टुभां सपदानां चतुस्त्रिंशच्छतानि च ॥४॥
बालानां बोधाय च वैरङ्गिकद्दानविजयवाचनाय ।
इषु-नेत्र-शैल-भूमिप्रमिते वर्षेऽत्र हर्षेण ॥५॥ चतुर्भिः कलापकम् ॥

लिखिता चेयं संवत् १७९८ ना वर्षे चैत्रवदि ६ दिने लिखितं मुनि-मोहनविजे(जयेन) चिरं जीवो ॥

[ 450 ]

अन्तः—तपगच्छजलधिचन्द्राः स्वाध्यायध्यानकरणनिस्तन्द्राः ।
भव्यजनानन्दकरा श्रीविजयानन्दसूरयोऽभूवन् ॥१॥
तत्पट्टोदयभूधरतरणिसमानतमस्तमोऽपहरे ।
श्रीविजयराजसुगुरौ सूरिगुणालङ्कृते विजयमाने ॥२॥
तत्सुसतीर्थ्यविबुधप्रत्याख्येन शान्तिविजयगणिनाम्ना ।
भवभावनायाः वार्तिकमलेखि शिशुनाऽऽशु मानविजयेन ॥३॥

[ 461, 462 ]

अन्तः—इति श्रीदेवचन्द्राचार्यविरचितं मूलशुद्धि-स्थानकविवरणं समाप्तमिति ।
आसीच्चन्द्रकुलाम्बरैकशशिनि श्रीपूर्णतल्लीयके
गच्छे दुर्धरशीलधारणसहैः संपूरिते संयतैः ।
निःसंबन्धविहारिहारिचरितश्चञ्चच्चरित्रः शुचिः
श्रीसूरिर्मलवर्जितोर्जितमतिश्चाम्रदेवाभिधः ॥१॥
तच्छिष्यः श्रीदत्तो गणिरभवत् सर्वसत्त्वसमचित्तः ।
नरनायकादिवित्तः सद्वृत्तो वित्तनिर्मुक्तः ॥२॥
सूरिस्ततोऽभूद् गुणरत्नसिन्धुः श्रीमान् यशोभद्र इतीद्धसंज्ञः ।
विद्वान् क्षितीशैर्नतपादपद्मः सन्नैष्ठिको निर्मलशीलधारी ॥३॥

नीरोगोऽपि विधानतो निजतनुः संलिख्य सर्वादरात्
सर्वाहारविवर्जनादनशनं कृत्वोज्जयन्ते गिरौ ।
कालेऽप्यत्र कलौ त्रयोदशदिनान्याश्चर्यहेतुर्जने
शस्यं पूर्वमुनीश्वरीयचरितं संदर्शयामास यः ॥४॥

तच्छिष्यो भूरिबुद्धिर्मुनिवरनिकरैः सेवितः सर्वकालं
सच्छास्त्रार्थप्रबन्धप्रवरवितरणाल्लब्धविद्वत्सु कीर्तिः ।
येनेदं स्थानकानां विरचितमनघं सूत्रमत्यन्तरम्यं
श्रीमत्प्रद्युम्नसूरिर्जितमदनभटोऽभूत् सतामग्रगामी ॥५॥

राद्धान्त-तर्क-साहित्य-शब्दशास्त्रविशारदः ।
निरालम्बविहारी च यः शमाम्बुमहोदधिः ॥६॥

सिद्धान्तदुर्गममहोदधिपारगामी कन्दर्पदर्पदलनोऽनघकीर्तियुक्तः ।
दान्तातिदुर्दममहर्द्धिकमहातुरङ्गः श्रीमाँस्ततः समभव....रिः ॥७॥

जगत्यपि कृताश्चर्यं सुराणामपि दुर्लभम् ।
निशाकरकराकारं चरित्रं यस्य राजते ॥८॥

तच्चरणरेणुकल्पस्तस्याणुर्देवचन्द्रसंज्ञोऽभूत् ।
तच्छिष्यो गुरुभक्तस्तद्वदधिधिषणो विनिर्मुक्तः ॥९॥

किञ्च—

श्रीमदभयदेवाभिधसूरेर्यो लघुसहोदरः ।
स इव तस्यैकवृत्तिं चक्रे सूरिः श्रीदेवचन्द्राख्यः ॥१०॥

मतिविकलेनापि मया गुरुभक्तिप्रेरितेन रचितेयम् ।
तस्मादियं विशोध्या विद्वद्भिर्मयि कृपां कृत्वा ॥११॥

आवश्यकसत्पुस्तकलेखनजिनवन्दनार्च्चनोद्युक्तः ।
शय्यादानादिरतः समभूदिह वीहकस्येव ॥१२॥

तद्गुणगणानुयायी श्रीवत्सस्तत्सुतः समुत्पन्नः ।
तद्वसतावधिवसता रचितेयं स्तम्भतीर्थपुरे ॥१३॥

रस-युग-रुद्रै(११४६)र्वर्तैर्विक्रमसंवत्सरे समाप्तेयम् ।
फाल्गुनसितपञ्चम्यां गुरुवारे प्रथमनक्षत्रे ॥१४॥

अणहिल्लपाटकनगरे वृत्तिरियं शोधिता सुविद्वद्भिः ।
श्रीशीलभद्रप्रमुखैराचार्यैः शास्त्रतत्त्वज्ञैः ॥१५॥

साहाय्यमत्र विहितं निज-शोकचन्द्रगणिनाम्ना (?)।
प्रथमप्रतिमाऽऽलिखिता विश्रामविवर्जितेन भृशम् ॥१६॥
प्रत्यक्षरं निरूप्यास्या ग्रन्थमानं विनिश्चितम्।
अनुष्टुभां सहस्राणि संपूर्णानि त्रयोदश ॥१७॥
इति मूलशुद्धिप्रकरणटीका समाप्ता ॥

[ 464 ]

इति श्रीवर्धमानदेशनायां तपागच्छाधिराजश्रीसोमसुन्दरसूरि-श्रीमुनिसुन्दरसूरि-श्रीजयचन्द्रसूरि--श्रीरत्नशेखरसूरि-श्रीलक्ष्मीसागरसूरि--श्रीसुमतिसाधुसूरिपट्टालङ्करणपरमगुरुश्रीहेमविमलसूरिविजयमानराज्ये पण्डितप्रकाण्डमण्डलीशिरोमणिपूज्यपं० श्रीसाधुविजयगणिशिष्यपरमाणुपण्डितशुभवर्धनगणिप्रणीतायां तेतलीश्रावकप्रतिबोधो नाम दशम उल्लासः ॥

[ 469 ]

**अन्तः**—श्रीगुरुखरतरगच्छे श्रीमज्जिनचन्द्रसूरिराजानाम्।
राज्ये विराजमाने मुनि-वार्धि-रसेन्दु(१६४७)मितवर्षे ॥१॥
श्रीक्षेमराजाभिधपाठकानां शिष्या विशेषक्षमया क्षमाभाः।
क्षमाधरा क्षोभविनेयवृन्दाः श्रीवाचका कीर्तिमहीजकन्दाः ॥२॥
प्रमोदमाणिक्यसुनामधेयास्तेषां च अत्यद्भुतभागधेयाः।
शास्त्रार्थसर्वस्वकल्पपरिज्ञा जयन्ति सुज्ञा यशःसोमसंज्ञाः ॥३॥
तेषां शिष्येणेयं गुणविजयाख्येन निर्मिता व्याख्या।
काऽपि यथादेशमणुस्त्वरितं वैराग्यशतकस्य ॥४॥
यद् यद् प्राकृतसूत्रे न मिलति तत्रापि पूर्वसूरिगिरा।
प्रामाण्यं ददाति विबुधाः सर्वं सत्यं समाधेये ॥५॥

[532]

**बा० आदिः**— श्रीगौतमाय नमः। श्रीजिनाय नमः। श्रीपार्श्वदेवो जयति ॥
ऐन्दवीयकलाशौक्लीं सहसौन्दर्यशालिनीम्।
सचित्कलामविकलां स्मरामोऽस्ततमोपहाम् ॥१॥
कर्मविपाकाविकृतः स्वसंविदे विश्ववन्द्यमभिवन्द्यम्।
वीरं कर्म्मविपाके टबार्थलिखनश्रमं कुर्वे ॥२॥
श्रीसन्तु सन्तु गन्तः सततमनया परात्महितनिरताः।
विमलीकुरुते कुवलयमुदितश्रीर्यशस्सोमः ॥३॥

केचित् परामर्शविधिकलाः विकलाः कलुकलायन्ते ।
तेभ्यो न कापि भीतिः सन्तः सन्तोषभाजश्चेत् ॥४॥

[535]

अन्तः -- इति श्रीमलयगिरिविरचिता सप्ततिटीका समाप्ता ॥ ग्रन्थाग्रम् ३७८० ॥ संवत् १४६४ वर्षे कार्तिकमासे शुक्लपक्षे द्वादश्यां तिथौ शुक्रदिने डूंगरपुरनगरे राउलश्रीप्रतापसिंहराज्ये लिखितं पश्चाकेन । शुभं भवतु । नमो भगवत्यै श्रीसरस्वत्यै ॥

अस्मिन् भारतभूतलेऽतिविपुले सन्न्यायधर्मान्वितः
श्रीमान् गूर्जरमण्डितोऽस्ति विषयः श्रीजैनहर्म्यैर्वृतः ।
अन्तस्तद्गगनाग्रलिट्ध्वजपटभ्राजिष्णुचैत्यत्रयी
प्राप्तप्रौढिभरोऽस्ति देलडलिकाग्रामः सुखैरव्ययी ॥१॥

वापी-कूपारामैरभिरामो राजते च यो ग्रामः ।
पुण्ड्रं नु भूपुरन्ध्र्या ह्रदहृदिनीपल्वलैः कलितः ॥२॥

प्राग्वाटवंशाम्बुजबोधभानू रत्नाह्वयः श्रेष्ठिवरो वदान्यः ।
तत्राभवच्छ्राद्धकुलावतूलः श्रीधर्मकर्माचरणानुकूलः ॥३॥

रत्नादेवी तस्य जायाऽजनिष्ट श्रेष्ठा शश्वत् शीलनाम्ना गुणेन ।
अर्हत्पूजा-सद्गुरूपास्तिलीना हीना दोषैः क्षान्तिपीयूषपीना ॥४॥

देवसिंह इति सिंहमहौजास्तत्सुतः समजनिष्ट सुतेजाः ।
प्रेयसी समभवत् कुलशीला तस्य धर्मकलिता किल देल्हूः ॥५॥

तयोस्तनूजत्रितयीत्रिनेत्रत्रयीव या त्रिजगत्प्रतीता ।
अभूज्जगत्सिंह इतीहमुख्यस्तेजाह्वयः पातलसंज्ञितश्च ॥६॥

इतश्च--

तत्रैव देपाल इति प्रसिद्धः श्रेष्ठीश्वरोऽभूद् रमया समृद्धः ।
तस्याभवद् रूपलनाम जाया जाउः सुताऽऽसीच्च तयोरमाया ॥७॥

अर्हद्गुरूपासन एकतानः शश्वत्स्फुरद्विश्वयशःप्रतानः ।
तेपृपश्रेमे जगसिंहनामा तां शुद्धशीलादिगुणां च जाऊं ॥८॥

एवं कालक्रमेणाजनिषत तनयाः षट् तयोर्धर्मनिष्ठाः
सद्वृत्ता वित्तवित्ता जगति सुविदिता न्यायवृत्त्या च गुर्व्या ।
गाम्भीर्यौदार्यवर्या विरतिरतिकृतो भाग्यसौभाग्यभाजः
सम्यक् श्रीदेव गुर्वाद्यमलगुरुलसद्भक्तिसुव्यक्तचित्ताः ॥९॥

सप्ताऽपि धातवो येषामर्हद्धर्माधिवासिताः ।
विरता उग्रपाप्मभ्यो रता सद्धर्मकर्मणि ॥१०॥

श्रीसंघकृत्यकरणैकनिबद्धकक्षाः श्राद्धैकविंशतिगुणा वनदक्षमुख्याः ।
सम्यक्त्वमुख्यरवि(१२)संख्यव्रतैः परीताः सत्पात्रदाननिरतत्वगुणप्रतीताः ।।११।

क्ष्मापाललक्षपतिवासितनव्यरम्य-श्रीजाउराह्वयपुरे सकलाकराढ्ये ।
यैः कारितं गगनमण्डललेहिकुम्भं श्रीजैनहर्म्यमतुलद्रविणव्ययेन ॥१२॥

यैर्नायकत्वेन जिनेन्द्रशान्तिबिम्बं स्वशान्त्यै शिवकारिहारि ।
नागहृदे तीर्थवरेऽतिचित्ते सीहावसत्यां विनिवेशितं च ॥१३॥

शत्रुञ्जये श्रीमति चोजयन्ते श्रीचित्रकूटे फलवर्द्धिकायाम् ।
सोपारके सत्पुरि जीरपल्ल्यां श्रीतीर्थयात्रा असृजन्मुदा ये ॥१४॥

देवकुलपाटकपुरे श्रीवृषभोत्तुङ्गभवनकरणार्थम् ।
यैरर्पिता स्वगृहभूबहुतरसद्द्रव्यभागोऽपि ॥१५।

एवंविधाः षडपि ये तनया जगत्यां राजन्ति वर्षधरभूधरषट्तयीव ।
सद्वर्णकान्तिकलिताः कमलालयाश्च क्ष्माभृत्कुलोन्नतिभृतः सुमनोविलासाः ।।१६।

तेष्वाद्यः केल्हाह्व साधुवरः समजनिष्ट नृपमान्यः ।
तस्याभूतां पत्न्यौ झोद्ध-पूजीति विख्याते ॥१७॥

पौरस्त्यायास्तनूजन्मा वींझाह्वो विनयान्वितः ।
द्वतीयस्या इयं जाता सत्पुत्रत्रितयी क्रमात् ॥१८॥

आद्यो जेसाह्वयः पद्मसिंहाख्यो द्वितीयः पुनः ।
तृतीयो नरपालस्तु दयापालनलालसः ॥१९॥

यस्यावलोक्य विरतिं प्रवरां विशुद्ध-
सम्यक्त्वपालनकलां च दयालुतां च ।
आनन्द-शङ्ख शतकोत्तम-कामदेव-
सन्नामधेयमधिहृत्सुधियः स्मरन्ति ।२०॥

सगुणैरद्वितीयोऽपि द्वितीयः समजायत ।
लोकंपृणोऽपि तच्चित्रं विश्रुतः कटुकाख्यया ॥२१॥

तस्याभवद् रूपकलानिधानं बाल्हः सुपत्नी तनयौ तयोः स्तः ।
आद्यः कलावान् खलु देवराजो द्वितीयकः सद्गुणभूर्धनाह्वः ॥२२॥

प्रासादशालाऽतुलकार्यसारा निर्माण-निर्मापणनित्यनिष्ठः ।
यो राजतेऽर्हत्प्रतिमाद्यनेकसत्कृत्यकारापणबद्धलक्षः ॥२३॥
उपमानानि क्लृप्तानि प्रतिवस्तु स्वयंभुवा ।
तेषु वीतोपमानः स्याद् य एवैकस्तु भूतले ॥२४॥
किं रोहणः सकलसद्गुणरत्नराशेः
कोशः कथं सुकृतसच्छ्रिय एष किंवा ।
आलानको विरतिजात्यकरेणुकायाः
संदेग्धि यं च समवेक्ष्य जनो हृदेति ॥२५॥
श्रीमद्युगादिप्रासादेऽन्तर्देवकुलिकं मुदा ।
येन सीमन्धरोऽस्थापि स हेमाह्वस्तृतीयकः ॥२६॥
दयिता तस्य सच्छीला हीरादेवीति विश्रुता ।
देवदत्तस्तयोः पुत्रश्चक्रुश्चासीत् तनूद्भवा ॥२७॥
तपोगणे श्रीमती तत्तनूजा जग्राह दीक्षां महता महेन ।
विशुद्धरत्नत्रितया च रत्नचूलेति नाम्ना यतिनी विनीता ॥२८॥
तुर्यो मालाभिधानः सकलगुणनिधिस्तस्य शाणीति पत्नी
जैत्राह्व· पञ्चमोऽभूत् खलु जयतलदेस्तस्य कान्ता ह्यकोपा ।
षष्ठः शिष्टो गरिम्णा जगति चरणसीस्तस्य जाया ललीति
शार्दूलस्तत्सुतोऽमो जिनगुरुचरणाम्भोजसच्चञ्चरीकाः ॥२९॥
रूडीति नाम्ना भगिनी च तेषां प्राणप्रियैका समभूत् समेषाम् ।
तपःपरिष्कारविलासिदेहा विशुद्धशीला सुकृता हतेहा ॥३०॥
इतश्च—

देवकुलपाटकाख्यं नगरं नगराजि राजितं पृथ्व्याम् ।
विदितं नगरपरिकलितं तिलकं सन्मेदपाटभुवः ॥३१॥
परःशतैः श्राद्धकुलैरुपेतमुत्तुङ्गजैनालयराजिमध्यम् ।
श्रीलक्षराणाभिधभूपभूतप्रभूतसद्‍‍‌‌‍धि विराजते यत् ॥३२॥
किंवाऽमरावती पृथ्व्यामवतीर्णाऽलका किमु ।
संशेते वीक्ष्य लोको यद् रामणीयकमद्भुतम् ॥३३॥
श्रीमत्तपोगणनभोऽङ्गणभास्करस्य श्रीदेवसुन्दरगुरोर्वरदेशनायाः ।
स्वान्यावबोध..................

[ 536 ]

बा० आदिः—प्रणिपत्य पार्श्वदेवं स्मृत्वा स्वगुरुं गिरं च भागवतीम्।
सप्ततिकाया व्याख्यां कुर्वेऽहं बालबोधार्थम् ॥१॥
मत्तोऽपि मन्दमतयो न जानते ये हि चूर्णिटीकोक्तिः।
तद्बोधानुग्रहधीविषयो यत्नः शुभाय तत् ॥२॥
केचित् परात्मसंविधिविकलाकलाः कलौ खलायन्ते।
तेभ्योऽपि न काऽपि भीतिः सन्तः सन्तोषभाजश्चेत् ॥३॥
श्रीहर्षसोमविबुधान् सुयशस्सोमाभिधानान् कविश्रेष्ठान्।
नत्वा सप्ततिकायाः लिखामि जनभाषया व्याख्याम् ॥४॥

बा० अन्तः—श्रीचन्द्रगच्छाम्बरपूर्णचन्द्रो मेधाविधिष्ण्योपगतो वितन्द्रः।
प्राप्तप्रतिष्ठो यवनेशसत्कः सूरीश्वरोऽभूद् विजयादिसेनः ॥१॥
तत्पट्टपूर्वाचलचित्रभानुः कुपक्षताक्षोल्बणचित्रभानुः।
महातपाख्यातिधरो धरायां जीयात् स सूरिर्विजयादिदेवः ॥२॥
तत्पट्टनाट्यप्रियमौलिनिष्ठोऽभूत् सूरिराजा विजयादिसिंहः।
यद्गोभरस्पृक्प्रशमामृतोपमान् दुदुश्च तच्चित्तविधूपलोमे ॥३॥
तदीयगच्छाम्बुजराजहंसः सद्विज्ञसंविज्ञजनावतंसः।
विध्वस्तदोषः कृतरोषशोषोऽभवद् यशस्सोमगुरुर्यशस्वी ॥४॥
किं वर्ण्यतेऽन्यद् गुणगौरवं गिराम्भोधेरमोघाचरणस्य तस्य।
यदीयविद्याधनतर्ज्जितोत्तरा किं सेवते देवगुरुर्न नाकम्? ॥५॥
जज्ञे यशस्तद्गुरुहस्तसिद्धियोगाज्जडोऽपीदृशशास्त्रवेत्ता।
किं योगिखाणिरिति चूर्णियोगाल्लोहं च लोहोत्तमतां दधाति? ॥६॥
संवद्विपूर्णार्णव-चन्द्र(१७१५)वर्षे लिलेख वृत्तिं जनभाषयेमाम्।
चतुःसहस्रं किल ग्रन्थसंख्या श्लोकस्य मानं कथितं च षष्टिः ॥७॥

इति श्रीसप्ततिकाकर्मग्रन्थबालावबोधः समाप्तः।

ग्रन्थसंख्या ४५६१ समाप्तौ च समाप्तोऽयं कर्मग्रन्थाभिधानो ग्रन्थः।

संवत् १८४१ वर्षे शाके १७०६ प्रवर्त्तमाने मासोत्तममासे चैत्रमासे कृष्ण-पक्षे षष्ठीतिथौ रविवासरे श्रीपत्तननगरे श्रीपञ्चासरजिनराजप्रासादे श्रेयो भवतु ॥

[ 548 ]

**अन्तः**—इति सकलसूरिपुरन्दरपरमगुरुतपागच्छाधिराजभट्टारकश्री५ श्रीहीरविजयसूरिप्रसादीकृतप्रश्नोत्तरसमुच्चये तत्शिष्यपण्डितकीर्तिविजयगणिसमुच्चिते चतुर्थः प्रकाशः, समाप्तोऽयं प्रश्नोत्तरसमुच्चयग्रन्थः। शोधितश्च संवत् १६५३ वर्षे पत्तननगरे वैशाखशुक्लचतुर्थ्यां बुधवासरे मृगशीर्षनक्षत्रे तपागच्छाधिराजश्रीविजयसेनसूरीश्वराणां निदेशात् महोपाध्यायश्रीसोमविजयगणि-पं०कल्याणकुशलगणि-पं०लब्धिसागरगणि—पं०लाभविजयगणिभिरिति। आचन्द्रार्कं चिरं नन्दतात्। श्रीः स्तात् श्रीसंघस्य।

संवत् १६९९ वर्षे आसोशुदिविजयादशमीदिने उसमांपुरवास्तव्यप्राग्वाटज्ञातीयवृद्धशाखायां साहश्रीचन्दभार्या व्हालादेसुतसाहऋषभदासेन लिखितः परोपकाराय। श्रीमत्तपागच्छे भट्टारकश्री ५ श्रीविजयाणन्दसूरीश्वरराज्ये पं० श्रीदेवविजयगणिशिष्य पं० मानविजयगणिवाचनकृते। शुभं भवतु लेखक-पाठकयोः॥

मुनेरतस्य सदाचारवर्णस्य मोहनप्रभोः।
शिष्यस्य पुस्तकं श्रीमद्धर्षनाम्नो मुनेरिदम् ॥२॥
लि० श्रीफलोधी मारवाडमध्ये ॥

[ 550 ]

**अन्तः**— दुर्वारविघ्नोत्कटवारणाय श्रीसिद्धचक्राय सुरद्रुमाय।
क्षमादिकल्याणसुपाठकाय प्रज्ञाप्रदात्रे च नमो नमोऽस्तु ॥१॥
वेदाष्ट-युग्मान्वित-भू(१८८४) मितेऽब्दे सत्कार्तिके शुद्धदले च पक्षे।
सुचन्द्रवारे द्वितीयातिथौ द्रागायुष्ययोगे प्रवरे सुरम्ये ॥२॥
चान्द्रे कुले श्रीजिनभक्तिसूरेर्वरान्वये वाचकरामचन्द्र—
प्रभोरुमेदाख्यधरेण वर्यशिष्येण दब्धं शतकं मनोज्ञम् ॥३॥
यः कोऽपि शब्दादिकदोषयुक्तो यातोऽत्र ग्रन्थे विदुषा स शोध्यः।
प्रमाददोषात् प्रतिकूलवाक्याद् ममातिसह्यं च सुदोषजालम् ॥४॥
संविग्नधर्म्मनन्दस्य मुनेः प्रार्थनया कृतम्।
नाम्ना हि सारशतकं मया जयपुरे वरे ॥५॥
इति सारशतकं संपूर्णम् ॥

सं० १९७२ का आसोजवदि १० लि० लहिया श्रीवल्लभजोशी।
शशि—वेदाङ्क—भू (१९४१)वर्षे गूर्जरे पुरि पट्टने।
गच्छस्तपोऽभिधो येनालंकृतो भेदभेदिना ॥१॥

[ 552 ]

अन्तः— श्रीमान् जगद्गुरुरिति प्रथितो धरैकवीरः स हीरविजयाभिधसूरिरासीत् ।
श्रीमत्तपागणपयोरुहभानुमाली यः प्रत्यबोधयदकब्बरभूमिपालम् ॥१॥
तत्पट्टभूषणमणिर्गणिलक्ष्मिकान्तः सूरिर्बभौ विजयसेनविभुः प्रतीतः ।
निश्शेषवाङ्मयमहोदधिपारदृश्वा विश्वोपकारकरणैकनिबद्धकक्षः ॥२॥
तत्पट्टे सुविहितमुनिसंघेनाराधितो जगत्पूज्यः ।
निश्शेषसूरितिलकं सूरिर्विजयतिलकगुरुरासीत् ॥३ ।
तत्पट्टे विजयन्ते युगप्रधानोपमानमहिमानः ।
विजयानन्दनिदानं श्रीविजयानन्दसूरीन्द्राः ॥४॥
तेषां सुविहितमुनिगणसितच्छदा सेवितांह्रिकमलानाम् ।
सुगुरूणामादेशान्निरुपमसौभाग्यभाग्याणाम् ॥५॥

किञ्च,

श्रीविजयदानसूरीश्वरशिष्याः ख्यातं चारुकीर्तिभराः ।
श्रीविमलहर्षवाचकमुख्या आसन् जगन्मान्याः ॥६॥
तच्छिष्यमौलिमणयो निजधिषणापाटवानुकृतधिषणाः ।
श्रीमुनिविमलाह्वाना वाचकतिग्मांशवोऽभूवन् ॥७॥
एषां स्वीयगुरूणां प्रसादश्चापि शास्त्रवर्णानाम् ।
अनुसन्धानं कृत्वाऽलिखदित्थं भावविजयगणिः ॥८॥
निधि-मुनि-रस-शशि(१६७९)सिमन्तवर्षे श्रीविक्रमार्कभूमिधरात् ।
श्रीकर्पटवाणिज्ये नगरेऽभूदयमुपक्रमः ॥९॥
अनेकशास्त्रार्थविचारसंग्रहे निरस्तदुर्बुद्धिकदाग्रहग्रहे ।
यद्दूषणं स्यात् तदपास्तविग्रहैः संशोधनीयं विबुधैः सदाग्रहैः ॥१०॥
श्रीशंखेश्वरपार्श्वनाथमहिमप्रत्यूषलब्धोदय-
श्रश्वच्छास्त्रविचारचारुकिरणो निश्शेषदोषापहः ।
श्रीमत्पूर्वमुनीन्द्रवाक्यकमलश्रेणीं समुल्लासयत्
सच्चक्रप्रणयिग्रहेशवदसौ ग्रन्थश्चिरं नन्दतात् ॥११॥
संवत् १९२९ वर्षे श्रावणशुदि ५ शुक्रे लिखा० पेटलादनगरे ॥

[ 556 ]

अन्तः—वाचनाचार्यप्रबोधचन्द्रगणिविरचिता सन्देहदोलावलीवृत्तिः समाप्ता ॥
चान्द्रे कुलेऽतुलबुधौजसि वर्द्धमानसूरिर्बभूव सुमुनिस्थितिकेलिधाम ।
ध्यानप्रकर्षमहिमेक्षितसूरिमन्त्रेशः साधुधर्म इव योग इवाथ मूर्त्तः ॥१॥

तत्पट्टेऽत्र जिनेश्वरो गुरुरभूद्भौलुक्यचूडामणि-
श्रीमद्दुर्लभराजराजसमितौ यस्योग्रया हुंकया ।
कम्प्राणां प्रतिवादिनां प्रविगलत्स्वेदोदबिन्दुच्छला-
न्निःसमुत्त्वरितं विषादत इवाङ्गेभ्यः सुविद्यालवाः ॥२॥

ध्वान्तं हतं खलु जगत्यपि हन्यतां ना-
दर्शयन्तरं सदसतोरपि दर्शयतां नः ।
उष्णद्युतस्तदपि भानुमता न लेभे
यस्योपमाऽभवदसौ जिनचन्द्रसूरिः ॥३॥

ततोऽनु जज्ञेऽभयदेवसूरिर्वृत्तिः कृता येन नवा नवाङ्गयाः ।
इतीव सेव्येयमभूद् ययेत्थं स्वसेविनां निर्वृतिदायिका च ॥४॥

विद्यामाभवतात् कुला जननिवाग्देवि त्वमाश्वासयै–
ता धातस्त्वमिमां प्रबोधय गिरं ब्रह्मन् ! स्वयं मा मुहः ।
आसीनोऽभयदेवसूरिमुनिराट्पट्टे जगद्वल्लभः
सूरिः श्रीजिनवल्लभः स्वरसतः सिद्धं च एवेप्सितम् ॥५॥

तत्पट्टे जिनदत्तसूरिरभवन्मार्तण्डचण्डप्रभौ
यस्मिन् विष्टपशर्मणे तत इतः स्वच्छन्दतः भ्राम्यति ।
तज्ज्योतिर्गलहस्तिताघनतमःपिण्डा इव द्विड्गजा
जग्मुर्दिक्षु विदिक्षु मङ्क्ष्वभिभवं वक्तुं नु दिग्दन्तिनाम् ॥६॥

कन्दर्पेऽपि न रूपमीदृशमिदं तेजो न सूर्येऽप्यसौ
वीणायामपि न ध्वनिर्न च कला चन्द्रेऽपि चैवंविधा ।
धात्रा तत् कथमेष ईदृगजनीत्याशङ्कि लोकैश्चिराद्
यं दृष्ट्वा जिनचन्द्रसूरिरथ सोऽभूत् तत्पदद्योतकः ॥७॥

येषां गीर्वाणवाणीलहरिभिरभितः प्रेर्यमाणाऽखिलाऽपि
श्रीपृथ्वीराजपृथ्वीपतिसमितिरिहाश्चर्यसिन्धौ ममज्ज ।
चित्रं तत्रापि शत्रोर्वपुषि ववृधिरे तर्षमालिन्यतापाः
पापानां किमेतज्जिनपतिगुरवस्तेऽथ पट्टे बभूवुः ॥८॥

अथ जिनेश्वरसूरिरिदं पदं सदमलंकुरुतेऽर्थ इवाद्भुतः ।
यदुपदेशगिरं विबुधाः सुधालहरितोऽप्यधिकं बहु मन्वते ॥९॥

ज्वलति परमज्योतिर्दीपो यदेष दिवानिशं
हृदयसदने चक्रे वागीश्वरीप्रतिचारिकः ।
तत इह हि महार्थानां कोटीर्विजृम्भत इत्यहो!
स्फुरति हृदि मे यन्नो लिङ्गं विना निजलिङ्गि नो ॥१०॥
तस्यास्त्वन्तेवासी प्रबोधचन्द्रगणिवाचनाचार्यः ।
गुरुकुलसेवाहेवाकविदितशिक्षाद्वयरहस्यः ॥११॥
सुविहितसामाचार्यां लक्षण-साहित्यविषयोर्यस्य ।
मूर्तो गुरुरिव गुरुरजनि वाचनाचार्यपद्मदेवगणिः ॥१२॥
जिनचन्द्रसूरिशिष्यः समजनि गुणभद्रवाचनाचार्यः ।
जङ्गमतीर्थः कातन्त्रपञ्जिकादौ गुरुर्यस्य ॥१३॥
कदापि न च यैक्षितामपि कथामिवान्वीक्षिकीं
यथा कविविवक्षितं सदसि यो बतार्थापयत् ।
स यस्य विनयोदधेर्विषमतर्कविद्यार्णवाऽ-
वगाहनविधावभूद् विजयदेवसूरिर्गुरुः ॥१४॥
नृपसमितिविजितविविधप्रतिवादिवितीर्णजयपताकौघाः ।
जिनपालोपाध्यायाः आसन् यस्यागमे गुरवः ॥१५॥
दीक्षाचार्यजिनेश्वरसूरिवचःसिद्धमन्त्रमासाद्य ।
सुधावबोधनार्थं तेनेयं विरचिता वृत्तिः ॥१६॥
प्रथमं लक्ष्मीतिलकोपाध्यायैः सूक्ष्मदर्शिमतिमद्भिः ।
जिनरत्नाचार्यैश्च चन्द्रतिलकैरुपाध्यायैः ॥१७॥
स्व-परसमयतत्त्वज्ञैरतिवत्सलमानसैर्महाकविभिः ।
प्रतिभाजितसुरगुरुभिस्त्रिभिरपि समशोधि विधिनाऽसौ ॥१८॥ युग्मम् ॥
अन्यैरपि विद्वद्भिः संविग्नैरत्र सूत्रबाह्यं यत् ।
संभाव्यते तदखिलं मिथो विचार्यैव संशोध्यम् ॥१९॥
अत्रार्थेऽहं तेषामञ्जलिबन्धं करोमि बहुमानात् ।
मिलितैरपि पूज्यानां ग्रन्थे महिमा यतो जन्या ॥२०॥
मा गां मार्गसमानताभ्रमभवद्व्यामूढतात्रोटिनी
तत्त्वज्ञानकरी कुमार्गगतसद्दोषव्रजाविष्करी ।
एषा निर्म्मलधर्मकर्मजननी संदेहदोलावली-
वृत्तिर्नन्दतु तापजाड्यमथनी भग्नीव चन्द्रार्कीया ॥२१॥

अस्याः सूत्रयुतायाः वृत्तेः प्रत्यक्षरं विमृश्य कृतम् ।
ग्रन्थाग्रं सप्ताधिकचत्वारिंशत् शतानि सार्द्धानि ॥२२॥
विक्रमवर्षे वारकरशिखिरूप(१३२७)मिते मधोः प्रथमपक्षे ।
पञ्चम्यां प्रह्लादनपुरनगरेऽसौ समर्थिता सोमे ॥२३॥
श्लोकमानं ग्रन्थाग्रम् ४७५० श्रीरस्तु । लेखक-पाठकयोः शुभं भवतु ।

[568]

अन्तः—इति श्रीमुनिचन्द्रसूरिविरचितेऽनेकान्तजयपताकोद्द्योतदीपिकावृत्ति-टिप्पनके मुक्तिवादाधिकारः समाप्तः । तत्समाप्तौ समाप्तमिदं निजविनेयरामचन्द्रकृता-त्यन्तान्तरङ्गसाहाय्येन श्रीमदनेकान्तजयपताकावृत्तिटिप्पणकम् इति ।

कष्टो ग्रन्थो मतिरनिपुणा संप्रदायो न तादृक्
शास्त्रं तन्त्रान्तरमतमतं सन्निधौ नो तथापि ।
स्वस्य स्मृत्यै परहितकृते चात्मबोधानुरूपं
मागामागःपरमहमिह तथा व्यापृतश्चित्तशुद्धया ॥

इत्याद्यनेकान्तजयपताकोद्द्योतटिप्पणकं समाप्तम् ॥
संवत् १६५५ वर्षे श्रावणसुदि १० बुधे लिखितमिदम् ।
(अन्यदीयहस्ताक्षरेण लिखितमिदम्—)
संविग्नेनान्विषदा तपगणपतिविजयसेनसूरीणाम् ।
श्रीरामविजयकृतिना चित्कोशे प्रतिरियं मुक्ता ॥

[576]

अन्तः—इति श्रीमत्तपागच्छालङ्कारहारभट्टारकघटकोटिरश्रीसोमजयसूरिशिष्य-शिरोमणि-श्रीइन्द्रनन्दिसूरिराजविनेयाणुश्रीसिद्धान्तसारकलिते श्रीदर्शनरत्नरत्नाकरग्रन्थे श्रीमदनुगमापरपर्याये तुर्यलहर्यां भगवन्निर्वाण-भर्तृनिर्वाणनामा संपूर्णस्तृतीय-स्तरङ्गस्तत्समाप्तौ च समाप्ता तुर्यलहरी तत्पूर्णीभवने च पूर्णनामाऽगमत् श्रीदर्शन-रत्नाकरग्रन्थः ॥

श्रीमत्कौटिकगच्छकाननवरे श्रीवज्रशाखामहा-
वल्लीव प्रससार तत्र समभूच्चान्द्रं कुलं गुच्छवत् ।
तस्मिन् सारफलोपमः समभवद् गच्छोत्तमः श्रीजग-
च्चन्द्राचार्यतपस्कृतेः क्षितितले ख्यातस्तयाऽभिख्यया ॥१॥
तत्पट्टैकविभूषणं समभवद् देवेन्द्रसूरीश्वरा-
स्तत्पट्टे किल धर्मघोषगुरवः सोमप्रभाः सूरयः ।

तत्पट्टाम्बरसोमसोमतिलकाचार्या अजायन् ततः
तत्पट्टोद्द्योतकदेवसुन्दरगुरुश्रेष्ठा विशिष्टा गुणैः ॥२॥
श्रीसोमसुन्दरगुरुप्रवरास्तु तेषां पट्टेऽभवन् भुवि गुणैर्विदिताः स्वकीयैः।
ते सूरयः सुविहिता मुनिसुन्दराख्याः सूरीन्द्रसूरिजयचन्द्रमुख्यास्तु पञ्च ॥३॥
श्रीरत्नशेखराद्या श्रीमुनिसुन्दरगुरोस्तु संताने ।
अभवन् सूरिप्रवरा नैके विद्यावदातधियः ॥४॥
श्रीजयचन्द्रगुरूणां कृष्णब्राह्मीतिलब्धबिरुदानाम् ।
श्रीसोमजयाचार्या अभवन् शिष्येषु मुख्यतमाः ॥५॥
तेषां नैकेऽभूवन् शिष्याः श्रीइन्द्रनन्दिसूरीन्द्राः ।
श्रीअमरनन्दिवाचकवरास्तु पं० नन्दि—सहजाख्याः ॥६॥
वरराजसोमपण्डित-वादिवरानन्द-सहजनामानौ ।
पण्डितवरेन्द्रसारा इति नैकपण्डितास्तेषाम् ॥७॥
श्रीमत्सोमजयाभिधानगुरुणा दत्तव्रते [च] क्रमात्
श्रीमत्सूरिवरेन्द्रनन्दिसुगुरौ संप्राप्तविद्येन च ।
संसारात् स्वयमिन्द्रसारगुरुणा निस्तारितेनार्णवात्
ग्रन्थोऽयं विहितः परोपकृतये सिद्धान्तसारेण तु ॥८॥
विक्रमतः सप्तति-तिथिमित(१५७०)वर्षे विरचितः ग्रन्थः ।
.... .... श्रीदर्शनरत्नाकराख्योऽयम् (?) ॥९॥

अङ्गोपाङ्ग-छेदोत्तराध्ययनसूत्र-पिण्डनिर्युक्तिः-आवश्यकनिर्युक्तिप्रमुखान्युपजीव्य-सूत्राणि ॥१०॥

श्रीहेमसूरिरचिताऽऽदिमजिनचरितानुसारतोऽग्रन्थि ।
ते ग्रथयन्त्वविरुद्धं तच्छोध्यं बुधवरैः सुधिया ॥११॥

इति श्रीदर्शनरत्नाकरग्रन्थोऽयं समाप्तोऽस्तु संपूर्णम्। संवत् १९६१ वर्षे मृगसिर कृष्णपक्षे चतुर्थ्यां शनिवासरे लिपीचक्रे र० मे० भगवानसिंहेन।

[587]

अन्तः—समाप्तमष्टमपरिच्छेदविवरणम् । तत्समाप्तौ च रत्नाकरावतारिका-पञ्जिका सिद्धिसौधमध्यमध्यासामास ॥

श्रीस्थूलभद्रवंशे हर्षपुरीये क्रियानिधौ गच्छे ।
देव्या चक्रेश्वर्या दत्तवरः षष्ठपारणकी ॥१॥

श्रीगूर्जरेन्द्रकर्णोद्घोषितमलधारिविशदवरबिरुदः ।
श्रीअभयदेवसूरिर्निरीहचूडामणिरदीपि ॥२॥
श्रीहेमचन्द्रसूरिस्तच्छिष्यो ग्रन्थलक्षकर्ताऽभूत् ।
श्रीगूर्जरजयसिंहक्षितिपतिनतचलननलिनयुगः ॥३॥
मुनिचन्द्रसूरि-हरिभद्रसूरि—नरचन्द्रसूरयः सर्वे ।
तेषामन्वयतिलकः सूरिः श्रीतिलक इत्युदीरितः ॥४॥
तस्यास्मि प्रियशिष्योऽहं सूरिः श्रीराजशेखरः ।
विद्वत्प्रसादतो ग्रन्थप्रथनारब्धपौरुषः ॥५॥
सोऽहं मोहतमःस्तोमविहस्तजनदीपिकाम् ।
पञ्जिकां रचयामास विनेयजनरञ्जिकाम् ॥६॥
दोषः कश्चन योऽत्राभून्मम प्रातिभमान्द्यतः ।
दूरे कार्यः स धीमद्भिः कुर्वाणैर्ममतां मयि ॥७॥
पुष्पदन्ताविमौ दीपौ यावद् द्योतयतो जगत् ।
तावन्नन्द्यादयं ग्रन्थो विदग्धजनवल्लभः ॥८॥

समाप्ता पञ्जिका ॥ संवत् विष्टप—शिपिविष्टदृष्टि—विशाखमुख-शिशिरा-भीशुपरिमितपरवाणौ (१६३३) वैशाखवदि ११ वासरे रविवारे । श्रीमद् बृहत्-खरतरगच्छाधीशश्रीजिनभद्रसूरिपदकुमुदचन्द्र-श्रीजिनचन्द्रसूरिभूरिगुणमणिसमुद्रश्रीजिनस-मुद्रसूरिपट्टोदयाचलचूलालंकरणहंसश्रीजिनहंससूरिराजानां शिष्यमुख्य—श्रीपुण्यसागर-महोपाध्यायपदपुण्डरीकचञ्चरीकेण पद्मराजमुनिना लिखितेयं स्ववाचनाय । श्रीमज्जेसल-मेरुमहादुर्गे । श्रीरस्तु ॥

[606]

**अन्तः**-पण्डित श्रीरूपचन्द्रगणिभिर्विरचिता, शोधिता च श्रीपण्डितश्रीचन्द्रगणिभिः

**वृत्ति-अन्तः**—श्रीहीरविजयसूरीश्वरा बभूवुर्जगत्त्रयीविदिताः ।
तद्वाचका महोदयराजः श्रीभानुचन्द्राह्वाः ॥१॥
जयन्तु ते वाचकभानुचन्द्राः अभ्यस्तसद्वाङ्मयवीततन्द्राः ।
ये मानसे हंसतया बभूवुरकब्बरक्षोणिपतेः सुभूपतेः ॥२॥
श्रीभानुचन्द्रामलपट्टचारुप्रासादशृङ्गार्जुनकुन्तकल्पाः ।
ते सन्तु चारूदयचन्द्रसन्तः सुखाय नः सूरिकलालसन्तः ॥३॥
सर्वार्थसार्थाङ्कितिकामधेन्वाः यस्य प्रसादाद् गुणचक्रधाम्ना ।
षट्त्रिंशिकायाः किल रूपचन्द्रो वृत्तिं चकारोदयचन्द्रशिष्यः ॥४॥

संवत् शरर्ष्यङ्क-निशेश(१६७५)वर्षे ज्येष्ठस्य कृष्णेतरकाइपक्षे ।
षष्ठयां तिथौ वाक्पतिवर्यवारे स्वस्यावबोधाय विनिर्मितेयम् ॥५॥
ग्रन्थाग्रं गणितं सर्वं संख्ययाऽत्र विनिश्चितम् ।
षट्शतं पञ्चविंशत्यधिकं जातमनुष्टुभाम् ॥६॥

संवत् १६७५ वर्षे षट्त्रिंशिकावृत्तिः तपागच्छे शत्रुञ्जयकरमोचनादि-सुकृतकारिमहोपाध्यायश्री११श्रीभानुचन्द्रगणिचरणनलिनमधुव्रतायमानपण्डितश्रीरूपचन्द्र-गणिना विरचिता श्रीरामनगरे वृत्तिकारकस्य पठन-पाठनयोश्च शुभं भूयादिदं पुस्तकं चिरं नन्दतु आचन्द्रार्कं संवद् रसेन्द्वब्धि-भूरिति(१७१६) वर्षे प्रोष्ठावदातत्रयोदशी-शितवर्यवारे लिखति ॥

[611]

अन्तः— वेद-वेदर्षि-चन्द्रेऽब्द इष (?) आसोसितपक्षतौ ।
विवव्रे तत्र वृत्तिश्च लावण्याह्वयवाचकैः ॥१॥
यावन्मही मृगाक्षीयं धत्ते वारिधिमेखलाम् ।
वाच्यमाना बुधैर्जीयात् सद्वृत्तिर्द्व्यसप्ततिः ॥२॥
तर्कादिशास्त्रनिपुणैर्वैराग्यामृतसागरैः ।
शोधितेयं श्रिये श्रीमद्विद्याविजयकोविदैः ॥३॥

संवत् १८५३ वर्षे फागुणसुदि ८ वारचन्द्रे लखावितम् । सा० श्रीवृक्षमजी लखावितं उपकारार्थम् ॥

[ 628 ]

अन्तः— अर्हं विनिहितदोषः सततं भव्यव्रजवारिजातकृतबोधः ।
गोभिः सकलपदार्थं प्रकटयिता जयति वीररविः ॥१॥
गौतम-सुधर्म्ममुख्याः प्रख्या आसन् गणाधिपा गुणिनः ।
तत्क्रमवर्ती श्रीजिनचन्द्रश्चन्द्रति युगप्रवरः ॥२॥
तस्मिन् गणेऽपि विजयिनि ढिल्लीनाम्नप्रबोधतपनिष्ठे ।
श्रीमति जिनसिंहाभिधसूरिवरे जयति युवराज्ये ॥३॥
श्रीमत्सागरचन्द्रसूरय इति क्षान्ताः क्षितौ धीधनाः
पञ्चानां परमेष्ठिनामिह चये प्राप्तास्तृतीये पदे ।
दत्तं श्रीजिनभद्रसूरिसुगुरोः सूरेः पदं यैरभूत्
तेषां शुद्धगुणान्वये विजयिनो व्यक्ता इमे जज्ञिरे ॥४॥

श्रीमहिमराजसुदयोदया दयासागरा वरा विद्वांसः ।
श्रीज्ञानमन्दिराह्वास्त्रयोऽप्यमी वाचकवतंसाः ॥५॥
श्रीदेवदेवतिलकोपाध्यायाश्चक्रवर्तिनो विज्ञाः ।
तच्छिष्यानूचानाः श्रीमन्तो विजयराजाह्वाः ॥६॥
वाचंयमजननिकरे कोटीरसमाः समागमार्थज्ञाः ।
तच्छिष्यपद्ममन्दिरगणिरर्थप्रदीपमिमम् ॥७॥
बालावबोधमकरोद् विबुधबोधाय निजकवि[त्व]वृद्धये ।
यदशुद्धमत्र किञ्चित् तज्ज्ञैः शोध्यं घृणावद्भिः ॥८॥
सुगुणगणिकनकसारो मेहाजलसाधु-साधुरिणमल्लौ ।
लिखन-सुशोधनकर्मण्येते साहाय्यकर्तारः ॥९॥
विषमपदार्थपूर्वसाहहमीरोपरोधतश्चक्रे ।
तत एतर्हि समग्रोऽभ्यर्थनयाऽलेखि साध्वीनाम् ॥१०॥
वर्षे शशि बाण-रसा-त्रिदिग्गजमाने(१५१३)सहः सितपक्षे ।
लक्ष्मीधले वारे गुरौ च पूर्णीकृतो ग्रन्थः ॥११॥
इति श्रीप्रवचनसारोद्धारसंपूर्णम् ॥

सं० १८३७ प्रमिते कार्तिकमासे बहुलपक्षे तृतीयातिथौ भौमवारे इदं(यं) पुस्तिका संपूर्णा। पं० कीर्तिहेम लिपीकृता श्रीपाटोधीमध्ये चतुर्मास्यां चक्रे ।

[ 631 ]

अन्तः— सपादलक्षक्षोणीशसमक्षं जिनवादिनाम् ।
श्रीधर्मघोषसूरीणां पट्टालंकारकारकाः ॥१॥
त्रिवर्गपरिहारेण गद्यगोदावरीसृजः ।
बभूवुर्भूरिसौभाग्याः श्रीयशोभद्रसूरयः ॥२॥
स्व-परसमयज्ञानप्रीतप्रकृष्टजगज्जना-
श्चतुरवचनामोदापृष्टाममरेशगुरुप्रभाः ।
अभिनृपसभं गङ्गागौरप्रनर्तितकीर्त्तय-
स्तदनु महसः पात्रं जाता रविप्रभसूरयः ॥३॥
एवं प्रवचनसारे तच्छिष्यलवश्चकार टिप्पनकम् ।
श्रीउदयप्रभसूरिर्विषमपदार्थावबोधाख्यम् ॥४॥
इह सन्ति तेऽपि सिद्धान्तसिन्धुपारीणबुद्धयः ।
सुधियः द्ववात्मभुवां येषां कौसुम्भरत्नायते विश्वम् ॥५॥

प्रवचनसारोद्धारश्रियः समस्ताङ्गसङ्गसुभगानाम् ।
स्यात् तद्विचारचर्च्चा तेषामेषा प्रमोदाय ॥६॥
प्रवचनसारं सारं विषमपदार्थावबोधतः सत्यम् ।
उदयात् सवितुर्विश्वविषयमपि सजीवमाभाति ॥७॥
सर्वप्रकारसाहाय्यकारिणः क्षान्तिशालिनः ।
जयप्रभस्य कृतिनः प्रयत्नादेष निर्मितः ॥८॥
अवधानवन्ध्यबुद्धिर्यदत्र न समञ्जसम् ।
उक्तवानहमुत्सूत्रं तत्र मिथ्याकृतं मम ॥९॥
यद्वा यदत्र किञ्चित् तनुमतिभिर्दोषमुदितमस्माभिः ।
प्रीतास्तद्धीमन्तः सन्तः कुर्वन्तु निर्दोषम् ॥१०॥

ग्रन्थाग्रम् ३३०३॥

[ 651 ]

**अन्तः**—शास्त्रान्तरेषु परिवीक्षितमर्थजातं
प्रायो मया विवृतमत्र न तु स्वबुद्धया ।
यत् स्यात् तथापि ननु सूत्रविरुद्धमुक्तं
तत् सूरिभिर्मयि कृपाकलितैर्विशोध्यम् ॥१॥
यस्माद् गभीरतरसूक्ष्मपदार्थजाते
छद्मावृतस्य नितरां विदुषोऽपि बुद्धिः ।
प्रायः स्खलत्यदृढशास्त्रपरिश्रमाणां
कर्म्मोदयाज्जडधियां किमु मादृशानाम् ॥२॥
संपूर्णनिर्मलकलाकलितं सदैव जाड्येन वर्जितमखण्डितवृत्तभावम् ।
दोषानुषङ्गरहितं नितरां समस्ति चान्द्रं कुलं स्थिरमपूर्वशशाङ्कतुल्यम् ॥३॥
तस्मिंश्चरित्रधनधामतया यथार्थाः संजज्ञिरे ननु धनेश्वरसूरिवर्याः ।
नीहारहारहरहासविकाशिकाश-संकाशकीर्तिनिवहैर्धवलीकृताशाः ॥४॥
ये निःसंगविहारिणोऽमलगुणा विश्रान्तविद्याधर—
व्याख्यातार इति क्षितौ प्रविदिता विद्वन्मनोमोदिनः ।
ये तुष्टा विजनेषु सांप्रतमपि ते प्राप्तोपमाः सर्वत—
स्तेभ्यस्तेऽजितसिंहसूरय इहाभूवन् सतां संमताः ॥५॥
उद्दामधामभवजन्तुनिकामवामकामेभकुम्भतटपाटनसिंहपोताः ।
श्रीवर्धमानमुनिपाः सुविशुद्धबोधाः तेभ्योऽभवन् विशदकीर्तिवितानभाजः ॥६॥

लोकानन्दपयोधिवर्धनवशात् सद्वृत्ततासंगतेः
सौम्यत्वेन कलाकलापकलनात् श्लाघ्योदयत्वेन च ।
ध्वस्तध्वान्ततया ततः समभवंश्चन्द्रान्वयं सान्वयं
कुर्वाणाः शुचिशालिनोऽत्र मुनिपाः श्रीशीलभद्राभिधाः ।।७।।
निःसंख्यैरपि लब्धमुख्यगणनैराशाविकाशं सतां
कुर्वाणैरपि संकटीकृतदिगाभोगैर्गुणिप्रीणकैः ।
श्वेतैरप्यनुरञ्जितत्रिभुवनैर्येषां विशालैर्गुणै-
श्चित्रं कोऽपि यशःपटः प्रकटितः श्वेतो विचित्रैरपि ।।८।।
सत्तर्ककर्कशधियः शुचिशुद्धबोधाः
सुव्यक्तसूक्तशतमौक्तिकशुक्तिकल्पाः ।
तेषामुदारचरणाः प्रथमाः सुशिष्याः
सद्योऽभवन्नजितसिंहमुनीन्द्रवर्याः ।।९।।
तेषां द्वितीयशिष्या जाताः श्रीमद्धनेश्वराचार्याः ।
सार्धशतकस्य वृत्तिं गुरुप्रसादेन ते चक्रुः ।।१०।।
शशि-मुनि-पशुपति(११७१) संख्ये वर्षे विक्रमनृपादतिक्रान्ते ।
चैत्रे सितसप्तम्यां समर्थितेयं गुरौ वारे ।।११।।
युक्तायुक्तविवेचन-संशोधन-लेखनैकदक्षस्य ।
निजशिष्यस्य सुसाहाय्याद् विहिताऽसौ पार्श्वदेवगणेः ।।१२।।
प्रथमादर्शं वृत्तिं सम....................

[ 660 ]

अन्तः—इति पद्मचरित्रं समाप्तमिति । मङ्गलं महाश्रीः ।।
अत्यद्भुतोन्नतिविराजिनि यत्र राजा
प्राप्ते क्रमेण घनमूर्जितमण्डलश्रीः ।
छत्रश्रियं दधदधात् पदसंन्निवेशं
श्रीभिल्लमालवसतिः स समस्ति वंशः ।।१।।
तत्र भूधरधरावतंसके धर्ममूर्तिरजनिष्ट जंबकः ।
अत्यजद्भिरपि यद्गुणग्रहं मार्गणैर्बत गतं दिगन्तरे ।।२।।
बभूव शाखिनस्तस्य नेढाकः सत्फलं सुतः ।
कृता येनोन्नता चित्रं शाखा वृद्धिमुपेयुषा ।।३।।
दयिता समभूत् तस्य शुद्धबुद्धिनिधिः प्रिया ।
सच्छाया कल्पशाखाऽपि नैव या विपदास्पदम् ।।४।।

दादाकः समभूत् ताभ्यां नवीनः कोऽपि नीरधिः ।
गुरोः कलानिधिर्येन मुक्तसङ्गो न जातुचित् ॥५॥
कान्ता बालमतिस्तस्य बभूव विलसद्गुणा ।
शीलशाला विशालाऽपि या चित्रं स्तम्भवर्जिता ॥६॥
श्रीसज्जनोऽजनि तयोः प्रथमस्तनूजो
लीलावतीललितदुर्ललिताङ्गयष्टिः ।
तच्चापलं किल विमोचयितुं गुणैः स्वैः-
र्लक्ष्मीर्निबध्य विधृता ध्रुवमेव येन ॥७॥
शोभाभिधानस्तदनन्तरोऽभूद् गिरो गुरूणामनिशं विकस्वराः ।
श्रोत्रावतंसश्रियमादधानाः पुष्णन्ति लक्ष्मीललितानि यस्य ॥८॥
गुणश्रेणीमुक्तावलिकलनलीलाञ्चिततनु-
स्तृतीयः श्रीवीरः समजनि कलाकेलिवसतिः ।
यशोहंसो यस्योत्तमनिखिललोकस्फुरदुरः-
सरःक्रोडे क्रीडन्मुदमकृत केषां न कृतिनाम् ? ॥९॥

इतश्च—

अत्रैव वंशे संजज्ञे जज्जुको महिमास्पदम् ।
श्रेयसी प्रेयसी तस्य वीजीति समजायत ॥१०॥
श्रीवीरकाऽजायत तत्तनूजा सुधां स्रवन्ती स्वकरैः स्वगोभिः ।
बिभर्ति या सोमकला विचित्रं न वक्रभावं न भवाभिषङ्गम् ॥११॥
अथ दोषात्ययशुद्धां पूर्वामिव वीरकामिमामुदितः ।
भानुरिव वीरनामा प्रभानिधिः प्रणयिनीमकरोत् ॥१२॥
प्रबुद्धमतिवैभवः स्फुरदगण्यपुण्योदय-
स्तयोर्जनि राणकः सुतशिरोमणिर्विश्रुतः ।
यदीयगुणसंकथा सकललोकवक्त्राङ्गणे
प्रभृत्यतिसुहृज्जनप्रथितसम्मर्दं सर्वदा ॥१३॥
व्ययकरणव्यापारं यः कुर्वाणोऽपि पत्तनेऽद्यापि ।
निजशुद्धबुद्धिवशतो राजश्रीवृद्धिमातनुते ॥१४॥
अपरा चन्दुका जज्ञे तनया विनयास्पदम् ।
गुणग्रामलसद्दाम्न विपद्वल्ली कुठारिका ॥१५॥

अभूतां तनयौ यस्याः श्रियः क्रीडावतंसकौ ।
आद्यो विजयपालाख्यो पृथ्वीपालस्ततोऽपरः ॥१६॥
आद्या शृङ्गारदेवीति राणकस्याभवत् प्रिया ।
लीलुकाऽजनि तत्पुत्री पवित्रमतिशालिनी ॥१७॥
यशोदेवी द्वितीया च यशःकुमुदचन्द्रिका ।
जज्ञिरे गुणिनो यस्यास्तनयाः सुनयास्त्रयः ॥१८॥
आद्यो वाग्भटनामाऽभूत् त्यागलालसमानसः ।
श्रितवासश्रियोऽभुवन् यदीययशसा दिशः ॥१९॥
विश्रामधामकीर्तीनां रत्नपालो द्वितीयकः ।
अभूत् सा०धनपालाख्यस्तृतीयः श्रीनिकेतनम् ॥२०॥
जयतलदेवीमाद्यस्तेजलदेवीं तथा परो विधिना ।
उपयेमे पुनरपरः सुयशाः सौभाग्यदेवीं च ॥२१॥
पत्नी सोमलदेवी च तृतीया मन्त्रिणोऽभवत् ।
शाला विशदशीलस्य क......................

[ 668 ]

**अन्त**—संवत् १५१६ वर्षे मागसर शुदि ५ दिने नलग(?क)च्छवासि-प्राग्वाटवंशसाहदेपाल-भार्यादेल्हणदे-सुत सा० लीवाकेन भार्यासाणी-पुत्रलालापुत्री-इलाषू भग(गि)नी धनी भ्राता हापा भार्या गुरी पुत्र गोपा-महिपा-झांझण-कुइरि समस्तकुटुम्बयुतेन पञ्चम्युद्यापनार्थं पञ्चग्रन्था लिखापिताः, तपागच्छाधिराजश्रीसोम-सुन्दरसूरि-शिष्यसोममङ्गलगणिभिः नन्दिमङ्गलगणीनामर्पिता ॥

[ 683 ]

**अन्तः**—संवत् १८८० वर्षे शाके १७४६ प्रवर्त्तमाने महामाङ्गलिकप्रद-मासोत्तममासे वैशाखमासे कृष्णपक्षे चतुर्दश्यां तिथौ बुधवासरे लिखिता । सकल-पण्डितशिरोमौलिमुकुटायमानमहोपाध्यायश्री[illegible]सागरजी-तच्छिष्यचरणसेवितप्रवरपण्डित-शिरोरत्नपण्डित श्रीकुशलसागरजी-तच्छिष्यमौलिमुकुटायमानपं० श्रीउत्तमसागरजी-तच्छिष्यचरणसेवकप्रवरपण्डितश्रीकान्तिसागरजीगणिशिष्य-प्र० पं० श्रीइन्द्रसागरजी-तच्छिष्यप्र०पं० उदयसागरजीगणि-तच्छिष्यपं० श्रीसुमतिसागरजी तच्छिष्यपं० विवेक-सागरजीगणिनाऽलेखि, काननपुरनगरे ॥

नाम ठाम गुर देव अरु अख्यर जे लोपंत ।
ते नर जनम जनम लग कुंभि नरक पडंत ॥
श्रीपार्श्वनाथजीप्रसादात्, श्रीकल्याणमस्तु ॥

[685]

अन्तः--श्रीऊकेशिगणे गुणौघरुचिरे श्रीकक्कसूरिर्गुरु-

स्तच्छिष्यो मतिसुन्दरः श्रुतनिधिर्विद्वानभून्निर्मलः ।

तच्छिष्यो मुनिदेवसुन्दर इतष्टीकां व्यधाद् यां नवां

तस्यां श्रीउपदेशदानचरितस्याभूत् तृतीयं शतम् ॥

[ 688 ]

अन्त--- जयति भुवनैकसूरः सर्वत्राविहितकेवलालोकः ।

नित्योदयः स्थिरस्तापवर्जितो वर्धमानजिनः ॥१॥

श्रीवीरवक्त्रात् त्रिदशीमवाप्य यो द्वादशाङ्गीं विमलां चकार ।

स्वामी सुधर्मा सकलर्षिशास्ता जीयात् स्वकीयान्वयवृद्धिकर्ता ॥२॥

चान्द्रे कुले श्रीविधिपक्षगच्छस्तत्राभवत् साधुपधर्ममूर्तिः ।

तदीयपट्टे शिवसिन्धुसूरिस्तत्स्थानके श्रीअमराब्धिसूरिः ॥३॥

तत्पट्टाम्बुजभास्करा भृशधियो दुर्वादिदन्तावलं

हर्यक्षा उपकेशवंशजनुषो रोषादिदोषद्विषः ।

निर्णीतागमशब्दशास्त्रविषया उद्योगिनोऽध्यापने

विद्यासागरसूरयो युगवरा विश्वप्रियाः स्वर्ययुः ॥४॥

तत्पदाम्भोजमधुपः सूरिश्रीउदयोदधिः ।

स्नात्रपञ्चाशिकाग्रन्थं रचयामास हर्षतः ॥५॥

वर्षेऽब्धि-स्वाहीन्दु(१८०७)मिते सुरम्ये श्रीपोषमासे च वलक्षपक्षे ।

श्रीपूर्णिमायां शशिवासरे च श्रीपादलिप्ताख्यपुरे सुराष्ट्रे ॥

श्रीयोगविमलसाधोस्तथा श्रीदर्शनाम्बुधेः ।

अभ्यर्थनया रचितो ग्रन्थोऽयं बोधिलब्धये ॥७॥

श्रीमालिवंशे गुरु-देवभक्तः कीकासुतः सा०कचराभिधानः ।

तदीयसंघेन समं च यात्रां कुर्वन् कृतोऽयं जिनराजभक्त्यै ॥८॥

यावल्लवणसमुद्रो यावन्मेरुमहीधरः ।

यावच्चन्द्रादित्यौ तावन्नन्दत्वयं ग्रन्थः ॥९॥

अर्हन्तो मङ्गलं मे स्युः सिद्धाश्च मम मङ्गलम् ।

साधवो मङ्गलं मे स्युः जैनो धर्मोऽस्तु मङ्गलम् ॥१०॥

इति प्रशस्तिः समाप्ता ॥ श्रीआदीश्वरप्रसादात् । संवत् १८०७ वर्षे आषाढमासे शुक्लपक्षे तृतीयातिथौ सोमवासरे श्रीराजनगरमध्ये लिपीकृतम् ॥

[ 692 ]

**अन्तः**— श्रीभक्तिलाभशिष्येण चारुचन्द्रेण गुम्फिता ।
चारित्रसारगणिना शोधिता हितकारिणा ॥१॥
बालत्वेऽपि कथा चेयमभ्यासार्थं कृता मया ।
बालावस्थाकृतं सार्वमहतां प्रीतये भवेत् ॥२॥
सुपात्रदानमाहात्म्यप्रकाशे ये परायणाः ।
श्रीउत्तमचरित्रस्य कथेयं नन्दताच्चिरम् ॥३॥
श्रीउत्तमचरित्रकथा समाप्ता ॥

[700]

**अन्तः**— श्रीमत्तपागणनभोऽङ्गणसूर्यकल्पश्रीसोमसुन्दरक्रमपद्मभृङ्गः ।
भव्याङ्गिबोधविधये सुगमार्थपद्यैश्चक्रे कथानकमिदं जिनकीर्तिसूरिः ॥
इति पालगोपालकथानकम् । लिखितं ईदलपुरे ॥

[711]

**अन्तः**—श्रीमद्वाचकराजराजिविलसत्प्रज्ञाप्रकर्षोदयाः
श्रीमन्तो विमलादिहर्षगुरवः ख्याता गुणश्रेणिभिः ।
सूक्तालीरुचिरं कथानकमिदं शीलप्रथाबन्धुरं
स्वस्यानन्दकृते जयादिविजयश्चक्रे तदीयः शिशुः ॥

इति श्रीतपागच्छाधिराजश्रीविजयसेनसूरीश्वरराज्ये महोपाध्यायश्रीविमलहर्षगणिचरणाम्भोजभृङ्गायमाणपण्डितश्रीजयविजयगणिना स्ववाचनकृते शीलव्रते शीलवतीकथा निर्मिता सद्भिर्वाच्यमाना नन्दतात् । शुभं भवतु ॥

[718]

**अन्तः**— श्रीविक्रमादित्यनरेश्वरस्य चरित्रमेतत् कविभिर्निबद्धम् ।
पुरा महाराष्ट्रवरिष्ठभाषामयं महाश्चर्यकरं नराणाम् ॥१॥
क्षेमङ्करेण मुनिना वरगद्य-पद्यबन्धेन युक्तिकृतसंस्कृतबन्धुरेण ।
विश्वोपकारविलसद्गुणकीर्तनाय चक्रे चिरादमरपण्डितहर्षहेतुः ॥२॥
ग्रन्थाग्रम् ११३० । संवत् १४७९ वर्षे राणपुरग्रामेऽलेखि ॥

[719]

**अन्तः**—श्रीतपागच्छनायकश्रीदेवसुन्दरसूरिशिष्यपण्डितक्षेमङ्करगणिकृता सिंहासनद्वात्रिंशिका । लिखिता श्रीसोमसुन्दरसूरि-शिष्यमहोपाध्यायश्रीसाधुराजगणितच्छिष्य पं० विबुधशिरोरत्न पं० नन्दिरत्नगणि–तच्छिष्यसहजरत्नगणिना स्वपरोपकाराय । भद्रं भवतु संघाय ।

सं० १५२३ वर्षे पौ० शु० १२ दिने सिद्धपुरनगरे शिवहर्षगणिशिष्येण लिखिता ॥

[721]

अन्तः—संवत् १५३५ वर्षे फाल्गुनकृष्णनवमी-भौमेऽद्येह श्रीमहीशासन-पुरे राजश्रीसीहाजीविजयराज्ये पण्डितचन्द्रयशोगणिशिष्यवर्गाणां महात्मा(त्मनां) महासतीनां च कथनार्थं लिखिता आचार्यविश्वनाथेन ॥ ग्रन्थाग्रम् १३६० । शुभं भवतु, कल्याणमस्तु सर्वेषां सपरिवाराणां समस्तचतुर्विधसंघस्य च । लेखक-पाठकयोः कल्याणम् ॥

[735]

अन्तः—अणहिल्लाभिधे रम्ये पत्तने पुण्यतास्पदे ।
ढण्ढेरपाटके ह्वये निष्पापवसतौ स्थिताः ॥१॥
सत्पक्षे पूर्णिमापक्षे गच्छे गौरवसंश्रिताः ।
वादीशाः समजायन्त श्रीविद्याप्रभसूरयः ॥२॥
तत्पट्टभूषणं श्रीमल्ललितप्रभसूरयः ।
ललितं वचनं येषां पीत्वा को न मुदं दधौ ॥३॥
तत्पट्टतोयजादित्यो विनयप्रभसूरिराट् ।
विनेतुं जन्तुकर्माणि देशनायोद्यतोऽभवत् ॥४॥
तत्पट्टमण्डनं श्रीन्महिमाप्रभसूरयः ।
जज्ञिरं महिमा येषामद्भुतः केन वार्यते ॥५॥
तत्पट्टभृद् यथाबुद्धि श्रीभावप्रभसूरिराट् ।
कृतवानिदमाख्यानं श्रोतॄणामिष्टसिद्धये ॥६॥
द्व्यष्टाश्व-भू(१७८२)मिते वर्षे ज्येष्ठाद्यशुक्लपक्षके ।
पञ्चम्यां भूमिभूवारे पूर्णतामिदमाप्नवान् ॥७॥

इति श्रीफाल्गुनचतुर्मासकव्याख्यानं संपूर्णम् ॥

[739]

अन्तः—श्रीहीरविजयगुरुपट्टे श्रीविजयसेनसूरीन्द्राः ।
तेषां स्वच्छे गच्छे विबुधश्रीराजसागरकाः ॥१॥
तेषां शिष्यसुशिष्यो निजमत्यनुसारतश्च माहात्म्यम् ।
मौनस्यैकादश्याश्चकार रविसागरो विबुधः ॥२॥

यत्राजाहरपार्श्वो यत्र स्तूपश्च हीरविजयसुगुरोः ।
यस्योपान्ते द्वीपाभिधबन्दिरमस्ति शस्तकरम् ॥३॥

उन्नतनगरे तस्मिन्नेतत् पूर्णीबभूव विद्वद्भिः ।
संशोध्य वाच्यमब्दे शर-सागर-रस शशि(१६७५)प्रमिते ॥४॥

इति श्रीमौनैकादशीव्रतमाहात्म्ये सुव्रतश्रेष्ठिचरित्रं सम्पूर्तिमगात् ॥

[ 743 ]

**अन्तः**—एवं श्रीवरसोमसुन्दरगुरुश्रीमत्तपागच्छराट्
शिष्यश्रीजयचन्द्रसूरिचरणाम्भोजप्रसादादयम् ।
संबन्धः किल पुण्यराजगणिना होलीरजःपर्वणः
संदृब्धः शर-दन्ति-रत्न(१४८५)शरादि प्राज्ञैश्चिरं वाच्यताम् ॥१॥

चन्द्रश्च निधि-हस्त्यब्देऽच्छे नभःसप्तमीबुधे ।
होलीचरित्रे स्तबुकं कान्त्यादिविजयोऽलिखत् ॥

इति श्रीहोलीपर्वश्लोकसंपूर्णम् ॥

[ 747 ]

**अन्तः**—श्रीमालोज्ज्वलवंशमौक्तिकमणेः श्रीजावडस्यार्थिनां
मत्वा मालवदेशमण्डनकरे श्रीमण्डपक्ष्माधरे ।
विद्वत्पुङ्गवतुङ्गसर्वविजयो यत्रेऽधिकारः क्रमा-
दानन्दादिमसुन्दरेऽत्र सुकृतग्रन्थेऽष्टमो जेजिनात् ॥१॥

इति श्रीमालकुलश्रीमालभारिमालेश्वर-श्रीखलचीगयासदीनगुरुनरेन्द्रगञ्जाधिकारि-लघुशालिभद्रेतिबिरुदधारिसुपुत्रश्रीहीरजीमातृसं० लीलाप्रमुखपरिवारपरिवृतसंघपतिश्री-जावडसमर्थाभ्यर्थनावशवर्तिसांप्रतीनकविचक्रचक्रव-र्त्तिमहापण्डितप्रष्ठश्रीमत्-सर्वविजय-गणिवरविधीयमाने श्रीवर्धमानदेशनारसनिधाने श्रीमदानन्दसुन्दराभिधाने नवम-दशम-श्रावककिञ्चिद्गुणबन्धे व्यावर्णनो नाम अष्टमोऽधिकारः ॥

संवत् १७६१ वर्षे शाके १६२७ प्रवर्तमाने चैत्रशुदि १३ भौमे । सकल-पण्डितसभाशृङ्गारहारपण्डितश्री ५ श्रीऋद्धिकुशलगणितत्पण्डितशिरोरत्नपण्डितश्रीअमृत-कुशलगणि-तच्छिष्यपं० रङ्गकुशलेन लिखितोऽयं जीर्णदुर्गे नेमिप्रसादात् ॥

[ 756 ]

**अन्तः**—श्रीनयविजयशिष्येण भक्तिना स्तबुकार्थकम् ।
चरित्रं चित्रसेनस्य पुण्यार्थं चारु निर्मितम् ॥

इति शीलविषये चित्रसेन-पद्मावतीमहासतीचरित्रं सपूर्णम् ॥

संवत् १८७३ वर्षे कार्तिकसुदिप्रतिपदातिथौ सोमवासरे सिहोरमध्ये ॥

**टबा अन्तः**—सकलपण्डितचक्रचूडामणिपण्डितश्री १९ पं० श्रीरत्नविजयजीगणी तच्छिष्यपण्डिततिलकायमानं श्री१० पं०श्रीदर्शनविजयगणी तच्छिष्यपण्डितश्री-नेमविजयगणी तच्चरणसेवी पं०विनयविजयगणी लिखितं स्वआत्मार्थे इदं पोषसुद-प्रतिपदातिथौ ॥

[ 762 ]

**अन्तः**—इति श्रीखरतरगच्छे श्रीजिनराजसूरिशिष्योपाध्यायश्रीजयसागरविर-चिते श्रीपृथ्वीचन्द्रचरिते एकविंशतिभववर्णनो नाम एकादशः प्रस्तावः ॥११॥

श्रीवीरशासनाम्भोधिसमुल्लासनशीतगोः ।
सूरेरभयदेवस्य नवाङ्गीवृत्तिवेधसः ॥१॥

पट्टालंकारसारश्रीसूरिश्रीजिनवल्लभः ।
संताने तस्य शस्यात्मा श्रीजिनोदयसूरिराट् ॥२॥

तत्पट्टशार्ङ्गभृद्वक्षःस्थलकौस्तुभसंनिभः ।
श्रीजिनराजसूरीन्द्रो योऽभूद् दीक्षागुरुर्मम ॥३॥

तदनु श्रीजिनवर्द्धनसूरिः श्रीमानुदैदुदारमनाः ।
लक्षण-साहित्यादिग्रन्थेषु गुरुर्मम प्रथितः ॥४॥

श्रीजिनभद्रमुनीन्द्राः खरतरगणगगनपूर्णचन्द्रसमः ।
ते चोपाध्यायपदप्रदानतो मे परमपूज्याः ॥५॥

श्रीजयसागरगणिना तेन मया वाचकेन भुवि भाव्यम् ।
पृथ्वीचन्द्रचरित्रं विरचितमिह विस्तरं सकलम् ॥६॥

प्रह्लादनपुरनगरे त्रि-बिन्दु-तिथि(१५०३)वत्सरे कृतो ग्रन्थः ।
माल्हूश्रावकवसतौ समाधिसंतोषयोगेन ॥७॥

अभ्यर्थना सत्यरुचेर्बभूव साह्राय्यकारी गणिरत्नचन्द्रः ।
उपक्रमोऽयं फलवान् ममाभूत् क्रिया हि साहायकसव्यपेक्षा ॥८॥

यद् गदितमल्पमतिना न्यूनाधिकमर्थजातमिह किञ्चित् ।
विद्वद्भिरमलधीभिः प्रसादमाधाय तच्छोध्यम् ॥९॥

अनुष्टुभां सहस्रे द्वे संपूर्णानि शतानि षट् ।
चतुःपञ्चाशदन्यावग्रन्थमानमुदाहृतम् ॥१०॥

अङ्कतोऽपि ग्रन्थाग्रम् २६५४। कृतिरियं श्रीजयसागरोपाध्यायानाम् ॥

श्रीमत्खरतरगच्छे श्रीमज्जिनकुशलसूरिसंताने ।
श्रीविनयप्रभपाठकशिष्यवरा विनयगुणकलिताः ॥१॥
तच्छिष्यशिरोमणयो वागीशाः क्षेमकीर्त्तिगणिविदुराः ।
तच्छिष्या विमलगुणाः पाठकपदयुक्तपोरत्नाः ॥२॥
तच्छिष्यसूरिमणयो जगति प्रधानाः श्रीशान्तिसागरयुगप्रवरा बभूवुः ।
तच्छिष्यराजजिनदेवयुगोत्तमानां वागीश्वरो विमलकीर्तिगणिर्लिलेख ।।३॥
देवादिसमुद्राख्योऽपरो भुवनसागरयुक् ।
तयोः सांनिध्यतोऽलेखि पृथ्वीचन्द्रकथानकम् ॥४॥

शुभमस्तु ॥

[773]

अन्तः—श्रीमत्तीर्थपतिर्जगत्त्रयनतः श्रीवर्द्धमानः प्रभु-
जीयात् तत्पदपङ्कजैकमधुकृत् श्रीमत्सुधर्मा गुरुः ।
तत्संतानसमुद्भवा युगवरा देवर्धिमुख्यास्ततः
पूज्यश्रीहरिभद्रसूरिगणभृद्वर्या गणाधीश्वराः ॥१॥
सज्ज्ञानाद्भुतवर्धमानसुगुरुश्चारित्रिणामग्रणीः
श्रीमत्सूरिजिनेश्वरः सुविदितः श्रीजैनचन्द्रस्ततः ।
संविज्ञोऽभयदेवसूरिसुनिराट् श्रीमज्जिनाद् वल्लभः
पूज्यश्रीजिनदत्तसूरिगणभृन्मुख्या मुनीन्द्रास्ततः ॥२॥
सूरीन्द्राः सुतरां जिनादिकुशल-श्रीजैनभद्रादय-
स्ते सर्वेऽपि जयन्त्वमी ध्रुवयुगप्राधान्यमाबिभ्रतः ।
येषां सर्वहितैषिणां सुमनसां सद्वाक्सुधास्वादतो
मादृग्मोहविमूर्च्छितोऽपि झटिति प्राप्तः प्रबोधाङ्कुरम् ॥३॥
त्रिभिः संबन्धः ।

अपि च,

यन्मादृशोऽपि मूढो महतां गुणवर्णनोद्यतो भवति ।
तत्र ज्ञान-दयानिधिगुरुप्रसादो हि सद्धेतुः ॥४॥

इति सद्गुरुस्तुतिमङ्गलम् ।

वर्षे नन्द-कृशानु सिद्धि-वसुधा(१८३९) संख्ये नभस्ये सिते
पक्षे पावनपञ्चमीसुदिवसे श्रीजेसलाद्रौ पुरे ।

श्रीमच्छ्रीजिनलाभसूरिगणभृत् तुल्यप्रतापोद्धुरे ।
कान्ते श्रीजिनचन्द्रसूरिमुनिपे धर्मेशतां बिभ्रति ॥५॥

सूरिश्रीजिनभक्तिभक्तिनिरताः श्रीप्रीतितः सागरा–
स्तच्छिष्यामृतधर्मवाचकवराः सन्ति स्वधर्मादराः ।
तत्पादाम्बुजरेणुराप्तवचनस्मर्ता विपश्चित् क्षमा–
कल्याणः कृतवान्मुदे सुमनसामेतच्चरित्रं स्फुटम् ॥६॥

उत्सूत्रमिह यदुक्तं मोहात् तद्दुरितमस्तु मे मिथ्या ।
यदवापि पुण्यमस्मात् तुष्यतु सकलोऽपि तेन जनः ॥७॥

इति परमपवित्रं श्रीयशोधरनरेन्द्रचरित्रम् ॥

[783]

**अन्तः**—जिनातिशय-यक्षाख्य(१३३४)वत्सरे विहिता कथा ।
ग्रन्थेन द्वादशशती चतुर्विंशति(१२२४)संयुता ॥

श्रीमालज्ञातीयहरदे[व]भार्या यामीनाम्न्या स्वश्रेयसे श्रीशालिभद्रचरित्रं श्रीसोम-सुन्दरसूरीणामुपदेशेन लेखितम् ॥

[ पश्चात्कालीनोऽयमुल्लेखः—]
संविग्नेनान्तिषदा तपगणपतिविजयसेनसूरीणाम् ।
श्रीरामविजयकृतिना चित्कोशे प्रतिरियं मुक्ता ॥

[780]

**अन्तः**—संवत् सिद्धि-रसाष्टैक(१८६८)प्रमिते मार्गशीर्षके ।
मासे हि कृष्णपक्षे च दशम्यां चरितं कृतम् ॥१॥

श्रीजिनहर्षसूरीणां राज्ये रम्ये प्रवर्तते ।
प्राकृतात् संस्कृतं रम्यं कृतं च जयकीर्तिना ॥२॥

श्रीमत्खरतरगच्छे कीर्तिरत्नाश्च सूरयः ।
तच्छाखायां सुजाता हि पाठकाः सुखलाभकाः ॥३॥

तेषां शिष्याः महादक्षा जिनहंससुवाचकाः ।
तेषां शिष्याः सदाचाराः श्रीमन्माणिक्यमूर्तयः ॥४॥

महोपाध्यायपदवीधारकाश्च जितेन्द्रियाः ।
तच्छिष्याः भावहर्षाश्च महाविद्याधरा वराः ॥५॥

अमरविमलाश्चात्र तच्छिष्याः पाठका मुदा ।
तच्छिष्याश्च विराजन्तेऽमृतसुन्दरनामानः ॥६॥
वाचका राजमान्याश्च वैद्यशास्त्रविशारदाः ।
तच्छिष्यमहिमाहेमः सतां मान्यो महासुधीः ॥७॥
तद्भ्राता जयकीर्तिश्च तेनेदं चरितं कृतम् ।
कान्तिरत्नसहायेन लिखितं शोधितं मुदा ॥८॥
श्रीमद्राजाधिराजस्य मूलराजस्य भूपतेः ।
राज्ये प्रतापसंयुक्ते पुस्तिकेयं कृता मया ॥९॥
श्रीचिन्तामणिपार्श्वेशः रक्षां करोतु नित्यशः ।
जेसलमेरुमहादुर्गे चतुर्मासी कृता वरा ॥१०॥
जीवराजेन रचितं श्रीपालचरितं शुभम् ।
कुशलेनाशु लिखितं श्रीसद्गुरुप्रसादतः ॥११॥

इति श्रीश्रीपालचरित्रे गद्यबन्धे चतुर्थः प्रस्तावः परिमितः । सं० १९२१ ना मिति वैशाखसुदि १० आदित्यवार ॥

[790]

**अन्तः**—श्रीमद्वीरजगत्प्रभुर्हितकरः सच्छासनाधीश्वरो
लोकालोकविलोकनैकनिपुणः शश्वज्जगच्छङ्करः ।
जित्वा कर्मरिपून् निवेश्य चरमं सद्धर्मराज्यं जगत्–
त्र्य्या चारुमहोदयाद्भुतपदानन्दामृतं संप्रति ॥१॥
श्रीमत्सुधर्मप्रमुखा गणेशाः सद्द्वादशाङ्गीरचनाऽतिदक्षाः ।
वृन्दारकैर्वन्दितपादपद्माः अवाजिपुः सिद्धिपदं विपद्माः ॥२॥
श्रीउद्योतनसूरयो युगवरास्तत्पादपद्मालया
जाताः श्रीवरवर्धमानमुनिपास्तत्पट्ट भूषाभृतः ।
संभूता हि जिनादिमेश्वरतपोद्रव्याधिपा भूतले
तत्पट्टे जिनचन्द्रसूरिपुङ्गवो संजज्ञिरे सत्तमाः ॥३॥
तत्पट्टे करुणाकरा यतिवरा सूरीश्वराधीश्वराः
श्रीमच्छ्रीअभयादिदेवगणपाश्चक्रेश्वरीशासनात् ।
नन्दाङ्गीजलजालिबोधनमहाप्रोद्यत्प्रतापारुणाः
सञ्जाता भुवि विश्ववल्लभतमास्तच्छिष्यमुख्यास्ततः ॥४॥

सत्प्रज्ञा हि जिनादिवल्लभगणाधीशा जगद्विश्रुता–
श्चामुण्डाभिधदेवतार्चितपदा आसुर्जिताक्षव्रजाः ।
तत्पादाम्बुजसेविनः सुखकरा गीर्वाणवृन्दैर्नुता
अम्भादक्षयुगप्रधानपदवीं ह्यां दधानाः क्षितौ ॥
भक्त्यासक्तजनेष्टदानसुविधौ मन्दारशालोपमाः
श्रीमच्छ्रीजिनदत्तसूरिगुरवोऽभूवन्मह्रीमण्डले ॥५॥षट्पदकाव्यम्॥

तत्पट्टे जिनचन्द्रसूरिविजितप्रज्ञामरुत्सूरय–
श्चञ्चत्सन्मणिमण्डितालकतटा जाग्रत्प्रतापोद्भटाः
जाता भूषिततत्पदा जितमदा दीव्यत्तपःश्रीवृता
भूता जैनपतिव्रतीश्वरवरा भव्याब्जसूरप्रभाः ॥६॥

तत्पट्टोदयभूध्रभास्करनिभास्तेजस्विचक्राग्रिमाः
श्रीजैनेश्वरसूरयोऽजनिषत प्रध्वस्तमोहद्विषः ।
तत्पट्टे च जिनप्रबोधगणपाऽग्रेगामिनः स्वामिनो
दुर्दान्तोऽग्रकुवादिसिन्धुरमहानादा बभूवुर्मुदा ॥७॥

तत्पट्टे जिनचन्द्रसूरिमुनिपाः कीर्तिं च चन्द्रोज्ज्वलां
विस्तार्य क्षितिमण्डले सुरपदं जग्मुस्तकच्छैष्यकाः ।
देवैर्वन्द्यपदा जिनादिकुशलाः सूरीश्वरा विश्रुता
दिव्यश्रीजिनशासनोन्नतिकराः कान्ता अभूवन् क्षितौ ॥८॥

तदनु परम्परया श्रीजिनभद्रमुनीश्वरादयो जाताः ।
तदनु च जिनेन्द्रविलसच्छासनवरमण्डनसमानः ॥९॥
येनाकब्बरयवनाधीशप्रत्तं समग्रपदमुख्यम् ।
युगवरपदं हि लब्धं स श्रीजिनचन्द्रसूरिरभूत् ॥१०॥
श्रीजिनसिंहमुनीन्द्रस्तत्पट्टमहोदयाचलपतङ्गः ।
तत्पट्टेऽमलगुणभङ्जिनराजयतीश्वरो जातः ॥११॥
तत्पट्टे वरखरतरगणखनिसञ्जातरत्नतुल्योऽयम् ।
श्रीजिनरत्नमुनीन्द्रो निस्तन्द्रोऽभूत् कुशलकरणे ॥१२॥
तत्पट्टे जिनचन्द्रसूरिगणपाः प्रोद्यत्प्रतापप्रभाः
जाताः श्रीजिनसौख्यसूरिगुरवस्तत्पादसेवापराः ।

तत्पट्टे जिनभक्तिसूरिरभवच्छ्रीजैनभक्तौ रत–
स्तत्पट्टे जिनलाभसूरिगुरुराट् स्वर्गालयं लब्धवान् ॥१३॥
तत्पट्टे सितकीर्तिसंधवलिताखण्डक्षमामण्डलो
यो दुर्दान्तकुवादिदर्पधरणीध्रोद्भेदनाखण्डलः ।
स श्रीमज्जिनचन्द्रसूरिमुनिराट् स्वर्गास्पदं जग्मिवान्
श्रीमच्छ्रीजिनहर्षसूरिगणभृन्मुख्याः स्थितास्तत्पदे ॥१४॥
पञ्चाचारोपयुक्ताः प्रतिपदमनिशं वन्द्यमाना जनौघै–
राजन्ते विद्यमाना गुणगणगुरवोऽस्याग्रहं संनिधाय ।
स्वान्ते तेषां वितन्द्रा गुणमणिनिधयो जैनभक्तिव्रतीन्द्रा–
स्तत्पादाब्जद्विरेमा विमलसुमतयः प्रीतितः सागराख्याः ॥१५॥
तच्छिष्यवर्यामृतधर्मवाचकास्तमत्पादसेवानिरतेन धीमता ।
संवेगरङ्गेन विभूषितात्मना सुबिभ्रता पाठकसत्पदं मुदा ॥१६॥
गुरुप्रसादाद् गणिना क्षमादिना कल्याणनाम्ना सुतरां विनिर्मितम् ।
पूर्वार्धमेतच्चरितस्य भूपतेः क्षमाभृतः श्रीसमरादिहर्मणे ॥१७॥
तदनु—
अब्दे वेद–मुनि -द्विप=क्षिति (१७७४) मिते कान्ते शिशिरर्त्तौ पुन–
र्माघे मासि मनोहरे सुखकरे पक्षे वलक्षेतरे ।
पुष्यायां तृतीयातिथौ पुरवरे वाऽऽनन्दिताशुप्रजे
विख्यातेऽजयमेरुनामनगरे प्रोत्तुङ्गदुर्गान्विते ॥२९॥
युगाद् वरः श्रीजिनसौख्यसूरिर्बभूव तच्छिष्यवरः सुकीर्तिः ।
कीर्त्याऽऽदिमो वर्धननामधेयस्तच्छिष्यमुख्योऽभवदत्र दक्षः ॥१९॥
लसद्गुणौघः सदिलादिधर्मः सुधर्मकृत्येऽभिरतः सदैव ।
मुनिर्विनतादिमसुन्दरः स तच्छिष्यभावं दधतेऽधुनेत्थम् ॥२०॥
संविग्नपक्षविहितप्रकटादरेण संख्यावता सुमतिबवर्द्धनसाधुनेदम् ।
विद्यागुरुप्रवरपाठकसत्क्षमादिकल्याणसद्गणिकृपां प्रणिधाय चित्ते ॥२१॥
विद्वद्वाचकमानवर्द्धनगणेः पार्श्वादिचन्द्राभिध–
गच्छीय[श्री]जिनादिचन्द्रविदुषः संप्राप्य साहाय्यकम् ।
एतत्सच्चरितस्य हारिसमरादित्यस्य भूमीपते–
श्चेतश्चित्तविधायिनो विरचितं चारूत्तरार्धं मुदा ॥२२॥
—चतुर्भिः संबन्धः ॥

यावन्महीमण्डलमध्यवर्ती मेरुर्वियत्स्वर्यम-चन्द्र-तारा ।
तावच्चिरं तिष्ठतु, वाच्यमानं चरित्रमेतच्छ्रुतिसौख्यकारि ॥२३॥
इह यल्लिखितमशुद्धं प्रमादतो बुद्धिमान्द्यतो वाऽपि ।
तच्छोध्यं विबुधवरैः कृपापरैर्मयि कृपां धृत्वा ॥२४॥
एतच्चरित्रममलं पठतां लपनेन शृण्वतां श्रवणैः ।
भव्यजनानां भावुकततयः संबोभुवतु सततम् ॥२५॥
आचार्यहरिभद्रमुनीश्वरवरकृत्यनुसारतो हि विपरीतम् ।
लिखितं प्रमादतस्तन्मम मिथ्यादुःकृतं भवतु ॥२६॥

संवत् १८८४ रा शाके १७४९ का मासोत्तममासे मिगसिरमासे कृष्णपक्षे तिथौ षष्ठ्यां भृगुवासरे सवाईजैयनगरमध्ये पं० चक्रपाणलिखितं श्रीसुपारसनाथजीप्रसादात् । श्रीरस्तु । कल्याणमस्तु ॥

[797]

अन्तः—अत्र धर्मघोष इति सूत्रकर्तुर्नाम, तत्संबन्धश्चायम्—अत्रैव चित्रकूटनगरे धर्मघोषगच्छे विद्यानन्दसूरयः अतीवपण्डिताः, सूरिमन्त्रत्रिलक्षजापकरणतः वशीकृतः पृथिवीपीठाधिपदेवताः वन्दनार्थं समागतेन मोकलराणाभिधानेन मेदपाटराजेन श्राविकाकृतगुहली दृष्ट्वा गुरवः पृष्टाः इदं किम् ? गुरवः प्राहुः—तन्दुलाः कौङ्कुमं जलं च । राज्ञा उक्तमथ मया सकटकेन इदमेव भक्ष्यम् । गुरुभिरुक्तं यथेष्टं भुज्यताम् । ततो गुरुणा गौतमस्वामिमन्त्रेण मन्त्रिताः तन्दुलाः कटकभोजनेऽपि न क्षीणाः इति विद्याचमत्कृतः मोकलराणः श्रीचित्रकूटे श्रीपार्श्वनाथप्रासादं चकार । तस्य शिष्यो धर्मघोषः यथार्थनामा वैराग्यवान् साधुक्रियानिष्ठः एकान्ते सर्वदा स्वाध्यायं करोति । तन्नगरे शङ्करश्रेष्ठी श्रीसंघमुख्यः जीवाजीवादितत्त्ववित् उपलब्धपुण्यपापः परिज्ञातास्रव-संवरः विज्ञातबन्ध-मोक्षः विजयाभिलाषी गुरुगच्छरागी जिनशासनोन्नतिकारकः प्रत्यहं प्रभाते सन्ध्यायां च सामायिकं करोति, तदानीमत्याग्रहेण सामायिके स्वाध्यायार्थं नवीनं किञ्चित् प्रकरणं कुरु(र्वि)ति, तदानीं गुरुणा धर्मघोषः समादिष्टः ऋषिमण्डलनामकं प्रकरणमकरोत् । शङ्करश्रेष्ठ्यपि पठित्वा प्रत्यहं सामायिके पठति, सहस्रप्रतय(तीः) लिखित्वा लेखयित्वा सकलगच्छवासिनां ददौ ।

अत्र केचित् साधुसंबन्धाः प्रसिद्धाः केचिदत्यन्तमप्रसिद्धाः ते सर्वेऽपि शास्त्रानुसारेण अविच्छिन्नसुगुरुसंप्रदायेन च लिखिताः ॥

श्रीवर्धमानजिनवरचरणाग्रनखांशुदीपिकावृत्तिः ।
मम मतितिमिरविनाशं समूलकाषं चरीकुरुताम् ॥१॥
पञ्चमगणधरवंशे कोटिकसाधोः सुविस्तृते गच्छे ।
वज्राभिधशाखायां चन्द्रमुनेः सत्कुले चान्द्रे ॥२॥
वन्देऽत्र मानदेवं श्रीमन्तं मानतुङ्गसूरिवरम् ।
वनवासियशोभद्रं विक्रमसूरिं विशालगणिम् ॥३॥
वन्दे देवाचार्यं कृतस्थितिं नेमिचन्द्र-मुनिचन्द्रम् ।
श्रीमदभयदेवगुरुं जिनवल्लभमेकजिनदत्तम् ॥४॥
पट्टानुक्रमजाताः श्रीजिनमाणिक्यसूरिसूरीन्द्राः ।
खरतरगच्छाधीशाः राहडवंशे ततोऽभूवन् ॥५॥
कुमतकदाग्रहनिरसनसुबद्धकक्षाविशिष्टपक्षधराः ।
भूपतिपूजितपादः प्रतिबोधितसबलयवनजनाः ॥६॥
अकबरसाहिपरीक्षाप्रदत्तयौगप्रधानपदबिरुदाः ।
शिष्य-प्रशिष्यशाखासंशोभितचरणभूमिरुहाः ॥७॥
श्रीजिनचन्द्रयतीन्द्रा तेषां शिष्याः परेशताः सन्ति ।
तेषु प्रथमे शिष्या विख्याताः सकलचन्द्राख्याः ॥८॥
तेषां मुख्याः शिष्याश्चतुर्थपरमेष्ठिनः कलाचतुराः ।
कलिकालकालिदासाः कूर्चालिसरस्वतीरूपाः ॥९॥
श्रीसमयसुन्दराह्वाः तेषां शिष्यः प्रशस्तहस्तकृतः ।
प्राग्वाटवंशरत्नः धर्मश्रीमज्जिकासूनुः ॥१०॥
मालापौत्रो मुख्यः वाचकवरहर्षनन्दनो वादी ।
ऋषिमण्डलसंबन्धानलिखत् स्तोकयत्नेन ॥११॥
गुरुसंप्रदायनिर्मितटीकायां ललितसंस्कृताख्यायाम् ।
श्रुतिदेवी-मतिदेवी सांनिध्यं तत्र कुर्वाताम् ॥१२॥
चतुरुत्तरसप्ताधिकदशशतवर्षेष्वतीतपूर्वेषु ।
विक्रमनगरे विजयिनि श्रीमच्छ्रीकर्णसिंहनृपे ॥१३॥
खरतरगच्छाधीश्वरजिनसागरसूरिनामके जयिनि ।
वृत्तिरियं संपूर्णा वसन्तमासस्य पञ्चम्याम् ॥१४॥

प्रथमादर्शालेखनप्रयत्नवरदयाविजयशिष्यस्य ।
धर्मोपदेशहेतुः सुवाच्यमाना चिरं नन्द्यात् ॥१५॥
इति ऋषिमण्डलटीका समाप्ता ॥

[807]

अन्तः—श्रीमच्छासनं जैनोद्योतकारी जगद्गुरुः ।
सौधर्मगणभृन्मुख्यान् नमामि पुरुषानपि ॥१॥
राधिकापुरशृङ्गारशोभनं दुरितक्षोभणम् ।
सुरालय इव महान् श्रीनाभेयजिनालयः ॥२॥
श्रीनाभेयप्रसादेन श्रोतानामनुग्रहाय च ।
विजयचन्द्रो(न्द्र)भगवान्(वत्)चरित्रस्तबकः कृतः ॥३॥
गज-बाण शशि-कुम्भे(१८५८) मैत्रमाससुखाकरः ।
श्रीदाननिधेः शिष्येण स्वेनायं च समुद्धृतः ॥४॥
साहेति जीवणनाम्नो द्वौ पुत्रौ कुलदीपकौ ।
गोविन्दजी-हिमजीनाम्नौ तयोरनुग्रहाय च ॥५॥

इति श्रीमद्विजयचन्द्रचरित्रेऽष्टधाजिनपूजागर्भितकथानकम्, सुविहितजनानां हिताय च श्रेयसे लेखक-पाठकयोः ।

संवत् १८८२ वर्षे आश्विनमासे कृष्णपक्षे १० तिथौ रविवासरे लिखितं श्रीचन्द्रावतीनगरमध्ये श्रीभट्टेवपार्श्वनाथजीप्रसादात् । सकलपण्डितशिरोमणि पं० दर्शन-विजयजी—तत्शिष्यपं० मानविजयजीग०—तत्शिष्यपं० जयविजयजीग०—तत्शिष्य-मुनिहीरविजयेन लिपीकृतम् ।

जिहां द्रू सायर चंद-रवी मेरु महीस्थित होय ।
तिहां प्रतपो परिवारयुत लेखक पाठक दोय ॥

[ 842 ]

**अन्तः** — श्रीशत्रुञ्जयकरमोचनाद्यनेकसुकृतकारिमहोपाध्यायश्री ५ श्रीभानुचन्द्र-गणिप्रकटप्रकृष्टपट्टोदयाचलसूर्यानुकारिसकलवाचकपरम्परामौलिमुकुटसदृशश्रीमत्शाहि-प्रदत्तखुसफहमबिरुदधारिवाचकश्रीसिद्धिचन्द्रगणिशिष्य-गणिरूपचन्द्रेण लिपीकृता श्री-तपागच्छसत्कपट्टावलीयं निजविलोकनकृते ॥ संवत् १६८५ वर्षे आषाढवदि एका-दशीवासरे सकलपुरवरे ।

[905]

अन्तः— श्रीमत्तपागणगगनसूर्यः श्रीविजयदानसूरीन्द्रः ।
समभूत् तत्संताने विबुधः श्रीगङ्गविजयाह्वः ॥१॥
तत्पादपद्मषट्पदः प्रवराः श्रीमेघविजयनामानः ।
समजायन्त कवीन्द्रा विमलचरणभूषिताङ्गास्ते ॥२॥
तत्पादपद्मसेवी जयति श्रीभाणविजययतिसिंहः ।
कीर्तिप्रतापगेहं भुवि सद्गीतार्थतां बिभ्रत् ॥३॥
तच्चरणकमलसेवी शिष्यो लक्ष्मीविजय इति विनयभृत् ।
विदधे स्तबुकार्थोऽयं गुरुकृपै(पया) शान्तिचरित्रस्य ॥४॥
नन्द-कृशानु-गो-रूपा(१९३९)इधौ विलक्षो यमला (?) ।
शौरीसनवार्तायां(?,लिखितं चमन्मल्लेन ॥५॥
यावन्मेरुमहीधरो० ॥६॥

इति श्रीशान्तिनाथचरित्रं संपूर्णं पार्श्वनाथप्रसादात् ।

[ 911 ]

अन्तः—इति श्रीमन्नागपुरीयतपागच्छाधिपभट्टारकश्रीअमरकीर्तिसूरिकृतस्य विशेषमहाकाव्यस्य ऋतुसमुदाये वसन्तर्तुवर्णनो नाम षष्ठः सर्गः ॥६॥

तत्समाप्तौ समाप्तमिदं विशेषकाव्याभिधानं काव्यं सटिप्पणतो लिखितमिदमृषि—खुस्यालचन्द्रेणाजयमेरौ संवदक्षाक्षि-वसु-वसुंधरा(१८२५)मिते द्वितीयलभस्यासितद्वितीयाकह्निप्रगे जवेन पूर्णीकृतं स्वाय च ॥

[ 944 ]

अन्तः—आनन्त्यात् सर्वशब्दानां न शक्यन्तेऽनुशासितुम् ।
बालव्युत्पत्तयेऽस्माभिः संक्षिप्योक्ता यथामति ॥१॥
प्रक्रियाकौमुदी सेयं रामचन्द्रप्रकाशिता ।
असद्वचस्तमो बध्यात् सच्चकोरप्रियाऽचिरम् ॥२॥
जयति शुभमूर्तिर्मुग्धहासावलोकः
प्रशमितजनतापो विट्ठलः स्वात्मदीपः ।
सचकितमिव लक्ष्मीः सेवते यत्पदाब्जं
ललितकरकराभ्यां साधु संवाहयन्ती ॥३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीगोपालनाथविट्ठलचरणारविन्दश्रीगोपाल-गुरुपूज्यपादश्रीकृष्णाचार्यसुतश्रीरामचन्द्रविरचिता प्रक्रियाकौमुदी समाप्ता ॥

[ 946 ]

अन्तः—आसीद् वादिद्विरदपृतनापाटने पञ्चवक्त्र-
श्चान्द्रे गच्छेऽच्छतरधिषणो धर्मसूरिर्मुनीन्द्रः ।
पट्टे तस्याजनि जनमनोऽनोकहानन्दकन्दः
सूरिः सम्यग्गुणनिधिः(धिरिति) ख्यातिभाग् रत्नसिंहः ॥१॥

यस्योपरागसीमायामुदयः परभागभाक् ।
देवेन्द्रसूरिस्तत्पट्टे जज्ञे नव्यो नभोमणिः ॥२॥

इतश्च—

निर्वीराघनमुक्तिशास्त्ररचना जीवावघोत्सर्पणा
श्रीकौमारविहारमण्डितमहीभूपप्रबोधादिकाः ।
क्षीरोदोदधिमुद्रितेऽवनितले यस्योर्जिताः केलयः
सोऽभूत् तीर्थकरानुकारिचरितः श्रीहेमचन्द्रो गुरुः ॥३॥

किञ्च—

भूपालमौलिमाणिक्यमालालालितशासनः ।
दर्शनषट्कनिस्तन्द्रो हेमचन्द्रो मुनीश्वरः ॥४॥

तेषामुदयचन्द्रोऽस्ति शिष्यः संख्यावतां वरः ।
यावज्जीवमभूद् यस्य व्याख्या ज्ञानामृतप्रपा ॥५॥

तस्योपदेशाद् देवेन्द्रसूरिशिष्यलवो व्यधात् ।
न्याससारसमुद्धारमनीषिकनकप्रभः ॥६॥

इति श्रीलघुन्यासप्रशस्तिः ॥

[ 950 ]

अन्तः— श्रीमद्गुरुतपागच्छे प्राज्यसाम्राज्यकारकाः ।
अभुवन् भुवनाख्याता लब्धिसागरसूरयः ॥१॥

तत्पट्टप्रकटाम्भोजे स भेजे राजहंसताम् ।
विजयन्तेऽधुना तेऽमी धनरत्नगुरूत्तमाः ॥२॥

श्रीलब्धिसागराचार्यपरिचर्याऽनुभावतः ।
प्राप्तोदयाः श्रीसौभाग्यसागराः सन्ति सूरयः ॥३॥

श्रीमल्लघुतपागच्छे विपश्चिन्मौलिमण्डनम् ।
श्रीहर्षकुलनामानः पण्डिता गुणमण्डिताः ॥४॥

तत्पार्श्वेऽध्यैष्ट सकलं हैमप्राकृतलक्षणम् ।
सर्वप्रयोगे व्युत्पत्तिरहस्यं लब्धवांश्च यः ॥५॥

सोऽहं सौभाग्यपाथोधिसुगुरुक्रमसेवया ।
सुधीरुदयसौभाग्यः प्रचक्रे ढुण्ढिकामिमाम् ॥६॥

विश्वजातरिपुव्रातध्वान्तनाशनभास्करे ।
पार्वणि(णे)न्दुलसत्कीर्त्तिधवलीकृतभूतले ॥७॥

प्रणमत्प्रौढपृथ्वीशकोटीरद्योतितक्रमे ।
बहादुरसुरत्राणे राज्यं पालयति क्षितौ ॥८॥ युग्मम् ॥

श्रीस्तम्भतीर्थनगरे भूम्यङ्क-तिथि(१५९१)मिते वर्षे ।
हर्षेण विहितो ग्रन्थो यदयं जयताच्चिरम् ॥९॥

ग्रन्थोऽयं नन्दतात् तावत् समग्रा(ग्र)धरणीतले ।
सूर्ये(र्या)चन्द्रमसौ यावद् यावन्मेरुमहीधरः ॥१०॥

अज्ञानादथवा किञ्चिदनाभोगतयाऽथवा ।
यत् किञ्चिल्लिखितं शास्त्रे तूर्णं तं शोध्यतां बुधाः ॥११॥

इति हैमप्राकृतढुण्ढिका संपूर्णम(मि)ता ॥

सं० १६८५ वर्षे वैशाखसुदि ७रवौ ल० ।

[ 954 ]

अन्तः--स्वस्ति श्रीमति सत्प्रभावकलिते विद्वद्गणालंकृते
श्रीमन्नागपुरीयसंज्ञकतपागच्छे प्रसिद्धे भुवि ।
जाग्रद्भारतिसुप्रसादसुरभिस्फारस्फुरत्तेजसि
सूरीन्द्रप्रवरे चिरं विजयिनि श्रीचन्द्रकीर्तिप्रभौ ॥१॥

नित्यं तेऽत्र जयन्ति गणैर्मान्याः समासादित(?)–
क्षेत्राधीशवराश्च पाठकवराः श्रीपद्मचन्द्राभिधाः ।
तच्छिष्योत्तमभावचन्द्रवचसा सारस्वतस्य स्फुटां
टीकां चारुविचारसाररुचिरां गोपालभट्टो व्यधात् ॥२॥
इति श्रीगोपालीटीका ॥

लिखितं पू० ऋ० श्री ५ भीषाजी तच्छात्रपू० ऋ० ५ तेजाजी पू० ऋ० श्री ५ सूजाजी पू० ऋ० श्री ५ दशर्थ(रथ)जी मुनिवरश्रीरतनाह्वेनालेखि प्रतिरियं श्रीरस्तु।

संवत् १७५८ वर्षे मार्गशीर्षमासे कृष्णपक्षे गुरुवासरे द्वितीयातिथौ संपूर्णतामगात् श्रीवसुपुरे। यादृशं० ॥१॥

[ 964 ]

**अन्तः**— अक्ष-वह्नि-नय-भूमि(१७३५)मितेऽब्दे
कृष्णपक्षयुजि मासनभस्ये।
चित्रभानुतनयस्य दिने मे
हेमचन्द्ररचिता लिखितेयम् ॥१॥

एवं श्रीमन्मडाहडगच्छे श्रीचक्रेश्वरसूरिसूर्यन्वये भ० श्रीकमलप्रभसूरिपट्टानुक्रमेण भ० श्रीज्ञानसागरसूरिविजयराज्ये अस्मिन्नेव गच्छे प्राक्जावालपुरवासि—वा० श्री-उदयधवलस्यान्तेवासिधर्म्मसुन्दर—तच्छिष्यवा० श्रीपद्मसुन्दर—गुणराज—जीवसुन्दराणां शिष्यभुजिष्यसारङ्गोऽलीलिखत् स्वहस्तेन प्रशस्तेन स्व-परोपकाराय। शुभं भवतु। कल्याणं भूयात् लेखक-पाठकयोः। कियत्यपि जीवसुन्दरेणालेखि ॥ चन्द्र-सूर्यौ० ॥१॥ तैलाद्०॥२॥ यादृशं० ॥३॥

[ 967 ]

**अन्तः**—संवद् वेद-शराब्धि-धिष्ण्यप्रमिते(१७५४)ऽब्दे फाल्गुनीयत्रयो—
दश्यां(१३) श्वेततिथौ शनैश्चरयुते पुष्ये समोद्भूत्तमे।
विद्वद्वृन्ददिवाकरोत्तमपयोधीनां गुरूणां शिशु—
र्न्यायाम्भोधिरिमां प्रति स्वलिखितां शुद्धीचकारोद्यतः ॥१॥
मेदिनीपुरे ॥

[977]

**अन्तः**— सद्वृत्तरत्नाकरनामधेयशास्त्रस्य वृत्तावधिकार एषः।
प्रस्तार-नष्टादिकवर्णतोऽत्र सोमोदितायामजनिष्ट षष्ठः ॥१॥
वादिश्रीदेवसूरेर्गणगगनविधौ बिभ्रतः शारदायाः
नाम प्रत्यक्षपूर्वं सुजयपदभृतो मङ्गलाह्वस्य सूरेः।
पादद्वन्द्वारविन्दे बुधमधुपहिते भृङ्गभङ्गीं दधानो
वृत्तिं सोमोऽभिरामामकृत कृतिमतां वृत्तरत्नाकरस्य ॥२॥

अन्यच्च—

प्रमादाद्दौःस्थ्यात् क्वचिदनवबोधो न यदिवा
ममैतस्यां वृत्तौ सहृदयजनाः कोमलमतेः ।
अवद्यं चेत् किञ्चिद् भवति भवतामञ्जलिरयं
प्रसादं कृत्वा तत् प्रगुणमतिभिः शोध्यमखिलम् ॥१॥

यावच्चन्द्रशशाङ्कछलेन विलसद्दीप्रप्रदीपाञ्चिते
रम्येऽनुक्षिपमन्तरिक्षफलके बद्धोत्सवं खेलति ।
तारासारदुरोदरेण निखिलं दिक्कामिनीमण्डनं
जीयात् तावदियं मनोहरपदा वृत्तिः प्रसादात् सताम् ॥२॥

श्रीविक्रमनृपकाले नन्द-कर-कृपीटयोनि-भू(१३२९)संख्ये ।
समजनि रजोत्सवदिने वृत्तिरियं मुग्धबोधकरी ॥३॥
सर्वाग्रं ग्रन्थाङ्के रुद्रमितशतानि नवतियुक्तानि(११९०) ।
अत्रानुष्टुभ्गणनायोगाज्जातानि किञ्चिदधिकानि ॥४॥

इति श्रीपण्डितसोमचन्द्रकृता रत्नाकरछन्दोवृत्तिः संपूर्णा समभूत् । ग्रन्था-ग्रन्थवृत्तेः ११९०, सूत्रस्य ग्रन्थाग्रम् १३६, उभयोर्मीलने ग्रन्थाग्रम् १३२६॥

## 2. INDEX OF THE WORKS

# 3. INDEX OF THE AUTHORS

## 4 INDEX OF KINGS, LAYMEN, ETC.

*[ col. no. 11 ]*

# 4. INDEX OF ACARYAS ETC.

*[ Col: No. 11 ]*

## 6. INDEX OF GACCHA, JÑĀTI Etc.

[ Col. No. 11 ]



## 7. INDEX OF WORKS Etc.

[ Col. No. 11 ]

## 8. INDEX OF DATED WORKS

[*Col. No. 11*]



## 9. INDEX OF DATED MSS.

| Year | MSS. |
|---|---|
| 1651 | 243 |
| 1652 | 435 |
| 1657 | 57 |
| 1659 | 80 |
| 1661 | 28 |
| 1662 | 1086, 1098 |
| 1664 | 25, 242 |
| 1665 | 1268 |
| 1666 | 1201 |
| 1669 | 469 |
| 1671 | 1348 |
| 1672 | 223 |
| 1674 | 238 |
| 1675 | 412, 1170 |
| 1681 | 636, 649 |
| 1682 | 331, 1150 |
| 1683 | 75 |
| 1686 | 54 |
| 1693 | 1256 |
| 1694 | 82, 1236, 1257 |
| 1701 | 552, 1173 |
| 1708 | 277 |
| 1709 | 529, 1718 |
| 1715 | 1265 |
| 1718 | 994 |
| 1719 | 329 |
| 1720 | 26 |
| 1724 | 246 |
| 1727 | 1077, 1194 |
| 1728 | 622, 1200 |
| 1736 | 183, 184, 536 |
| 1737 | 1285 |
| 1739 | 67 |
| 1742 | 29, 1221 |
| 1746 | 1296 |
| 1750 | 218, 643, 673, 1214 |
| 1753 | 1206 |
| 1754 | 393 |
| 1755 | 69 |
| 1765 | 220 |
| 1776 | 426 |
| 1782 | 1073, 1166, 1209 |
| 1785 | 473, 582 |
| 1786 | 88 |
| 1788 | 199, 1106 |
| 1790 | 4, 19, 642 |
| 1796 | 509, 510 |
| 1801 | 1056 |
| 1803 | 276, 485, 534 |
| 1805 | 511, 1087 |
| 1810 | 1324 |
| 1815 | 180, 181 |
| 1816 | 230, 237, 1134, 1319 |
| 1817 | 1323 |
| 1819 | 1315 |
| 1824 | 463, 1047 |
| 1828 | 1334 |
| 1829 | 501, 557, 977 |
| 1837 | 1283 |
| 1841 | 1074 |
| 1846 | 1130 |
| 1850 | 1132 |
| 1851 | 1211 |
| 8852 | 135, 143, 149, 996, 1165 |
| 1853 | 323 |
| 1855 | 513 |
| 1857 | 164 |
| 1859 | 293 |
| 1860 | 1104 |
| 1861 | 298 |
| 1862 | 491 |
| 1864 | 1288 |
| 1866 | 1282 |
| 1868 | 675, 678 |
| 1870 | 70 |
| 1871 | 214 |
| 1872 | 988 |
| 1873 | 178, 201, 203, 211, 212, 215–217, 224, 226, 227, 232, 233, 235, 236, 244, 254, 256, 258, 260, 262 265–267, 272, 310, 317, 387, 543, 635, 640, 648, 1121, 1136, 1137 1141, 1210 |

| Year | MSS. |
|---|---|
| 1879 | 495 |
| 1881 | 1307 |
| 1883 | 87, 1111, 1203, 1883 |
| 1885 | 10, 48, 986, 1116 |
| 1889 | 1264 |
| 1892 | 444 |
| 1893 | 563, 655 |
| 1896 | 289, 559, 1114 |
| 1897 | 1292 |
| 1902 | 99 |
| 1903 | 1293 |
| 1905 | 45 |
| 1906 | 92 |
| 1908 | 288, 1090 |
| 1910 | 364 |
| 1915 | 454 |
| 1919 | 1068 |
| 1927 | 74 |
| 1928 | 633, 1078 |
| 1929 | 113 |
| 1934 | 619 |
| 1937 | 151 |
| 1938 | 981 |
| 1946 | 385, 1295 |
| 1950 | 1066, 1119, 1149, 1306 |
| 1952 | 190, 505, 521 |
| 1953 | 86, 989 |
| 1954 | 325, 344, 359 |
| 1956 | 21, 399, 441 |
| 1957 | 314, 334, 550, 569, 572, 581, 618, 1054, 1237, 1240 |
| 1958 | 320, 460 |
| 1959 | 461, 559, 1062, 1143, 1326 |
| 1960 | 9, 65, 587, 1060, 1070, 1142, 1312 |
| 1961 | 312, 337, 519, 561, 1065, 1110, 1157, 1083 |
| 1962 | 204, 322, 578, 614, 1063, 1065, 1067, 1154 |
| 1963 | 63, 115, 449, 571, 567, 593, 611, 623, 628, 1061, 1107 |
| 1964 | 1, 124, 153, 176, 200, 208, 271, 303, 349, 353, 371, 413, 477, 480, 524, 537, 554, 588, 591, 598, 629, 1088, 1139, 1218, 1271, 1339 |
| 1965 | 20, 110, 177, 284, 340, 347, 394, 410, 542, 544, 546, 594, 597, 601, 612, 669, 1057, 1159, 1160 1163, 1341 |
| 1966 | 83, 400, 600, 609, 616, 1053, 1058, 1058, 1092, 1195, 1336 |
| 1967 | 268, 302, 316, 342, 366, 370, 380, 398, 532. 605, 1109, 1197 |
| 1968 | 352, 409, 638 |
| 1971 | 108, 1049 |
| 1972 | 234, 551, 1156 |
| 1973 | 530, 670 |
| 1979 | 1127 |
| 1983 | 1127 |

# 10. GEOGRAPHICAL NAMES

[ *Col. No. 11* ]

## १. प्रशस्तिगत-आचार्यादिनाम्नामनुक्रमणिका ।

## २. प्रशस्तिगत-गृहस्थादिविशेषनाम्नामनुक्रमणिका।

---

## ३. प्रशस्तिगत-वंश-ज्ञाति-गोत्रादिनाम्नामनुक्रमणिका ।



---

## ४. प्रशस्तिगत-नृपादिनाम्नामनुक्रमणिका ।



---

## ५. प्रशस्तिगत-नगरादिनाम्नामनुक्रमणिका ।

## ६. प्रशस्तिगत–ग्रन्थादिनाम्नामनुक्रमणिका

## 2. INDEX OF THE WORKS

# 3. INDEX OF THE AUTHORS

# 4. INDEX OF KINGS, LAYMEN etc

*[Col. No. 11]*

# 5. INDEX OF ĀCĀRYAS etc.

*[Col. No. 11]*

# 6. INDEX OF DETED MSS.

| Year | MSS. |
|---|---|
| 1660 | 41 |
| 1661 | 202 |
| 1662 | 703 |
| 1664 | 304 |
| 1666 | 245 |
| 1667 | 309 |
| 1668 | 105 |
| 1669 | 796 |
| 1672 | 268, 474, 798 |
| 1673 | 59, 325 |
| 1674 | 70, 547 |
| 1675 | 69, 629 |
| 1684 | 11 |
| 1685 | 842, 950 |
| 1686 | 845 |
| 1688 | 30, 33 |
| 1692 | 982 |
| 1693 | 87 |
| 1699 | 520, 548, 627 |
| 1710 | 648 |
| 1711 | 210, 993 |
| 1712 | 250 |
| 1716 | 606 |
| 1718 | 384, 613, 647, 1038 |
| 1721 | 689 |
| 1726 | 23 |
| 1729 | 17, 88 |
| 1730 | 652 |
| 1731 | 539 |
| 1732 | 192, 431 |
| 1733 | 58 |
| 1735 | 932 |
| 1736 | 204, 267 |
| 1744 | 395 |
| 1747 | 1013 |
| 1749 | 314 |
| 1751 | 94 |
| 1754 | 958, 967 |
| 1756 | 227 |
| 1757 | 5 |
| 1758 | 954 |
| 1761 | 630, 747 |
| 1762 | 1036 |
| 1766 | 581, 583, 590, 708, 896, 1008 |
| 1767 | 61 |
| 1769 | 156, 373 |
| 1770 | 816 |
| 1771 | 936 |
| 1773 | 429 |
| 1775 ( ? ) | 546 |
| 1779 | 622 |
| 1786 | 479 |
| 1789 | 308, 479, 619, 995 |
| 1794 | 482, |
| 1795 | 397, 527 |
| 1798 | 251, 454, 973 |
| 1799 | 861, 862 |
| 1800 | 927 |
| 1801 | 56, 320. 400 |
| 1803 | 730 |
| 1807 | 687 |
| 1811 | 534, 595, 777 |
| 1813 | 325 |
| 1814 | 971 |
| 1819 | 324 |
| 1822 | 1002 |
| 1824 | 442, 443 |
| 1827 | 174 |
| 1830 | 89 |
| 1831 | 9 |
| 1832 | 965 |
| 1833 | 522 |
| 1835 | 323 |
| 1837 | 155, 302, 624 |
| 1838 | 416 |
| 1839 | 846 |
| 1840 | 731 |
| 1841 | 532, 536, 882 |
| 1844 | 926, 1041 |
| 1845 | 132 |
| 1846 | 722, 999 |
| 1848 | 931 |

